श्री.

# श्रीश्रुतज्ञान अमीधारा

अथवा

# श्रीशान्तसुधारसादिग्रन्थसन्दोहः ।

संग्राहक

प० पू० पन्यास क्षमाविजयगणी

प्रकाशक

सुकृताभिलाषुकः श्रावकश्राविकासमुदायः

मुम्बय्यां

निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा प्रकाशितः ।

शके १८५७, सन १९३६

प्रथमावृत्तिः अमूल्यम्

आत्मारामेति ख्यातोऽभूद्विजयानन्दसूरिराट् ।
तस्य शिष्यः सुचारित्रश्चारित्रविजयाभिधः ॥१॥
तस्य शिष्यस्य नानागुणरत्नमहोदधेः
अमीविजयख्यातस्य स्थापनेयं शिवप्रदा ॥२॥



जन्म १९२० चाणोद मारवाड    दीक्षा १९५० जामनगर काठियावाड    स्वर्गवास १९८७ पाली मारवाड



## सादर समर्पण.

परमकृपालु गुरुमहाराज श्रीअमीविजयजी महाराज.

आपना वात्सल्यमयी प्रयत्न ना प्रतापेज म्हारा जेवो

धर्मवाह्यवाचन नो रसिओ आत्मा पण महान्

जैनाचार्योए वरसावेल श्रुतज्ञानरूपी अमृतधारा-

नो यत् किंचित् स्वाद चाखनार बन्यो,

ते महान् उपकार ना यत्किंचित् स्मरण

रूपे आप श्री ना यथार्थ नामथी

मिश्रित आ ग्रन्थ सन्दोह आप

श्रीने सादर अर्पण करी

कृतार्थता अनुभवु

छु

चरण सेवक,

पन्यास क्षमाविजय गणी

## સુકૃત કરનાર સાધર્મિ ભાઈ બ્હેનોના શુભ નામો.

રૂ ૫૦ શેઠ પુનમચંદ પચાણ
, ૨૫ , વીરચંદ દેવસી
, ૭૫ ,, ચપકલાન બાપુનાનની કુપની
, ૨૦ , માનમનજી પાદરલીવાળા
, ૨૫ મણીયાર જીવરાજ હીરાચંદ
, ૩૧ બ્હેન બગીબાઈ અબાજી
, ૧૦૦ સૌભાગ્યવતી ભુતી હા રાજમલ ભીમાજી
, ૨૫ શેઠ માણીલાલ ગુણચંદ
, ૨૮ બ્હેન ચપાબ્હેન નીભોવન દાસ હસ્તક
,, ૧૦૦ અખડ સૌભાગ્યવતી હીરાબેન વ્હા છોટાલાલ ગુમખરામ
૧૦ લાધીબેન નેમચંદ
૫ લક્ષ્મીબેન જેઠાભાઈ
૧૧ એક સદ્‌ગૃહસ્થ
, ૧૨ પરચુરણ

આ પુસ્તકના બાઇડીંગના ખર્ચ પેટે રૂા ૧૨૫) અધેરી સઘના જ્ઞાનખાતા તરફથી શેઠ દલતલાલ પરતાપસી હસ્તક પૂજ્ય મુનિમહારાજ શ્રી સુમતિવિજયજી મહારાજના સદુપદેશથી મળ્યા છે

લી૦ શ્રી સઘસેવક
નાનુભાઈ નગીનચંદ ઝવેરીના
પ્રેમપૂર્વક પ્રણામ વાચશોજી

# સુકૃતના સહભાગીઓનો આભાર.

પરમ પૂજ્ય ગુરૂદેવ શ્રીઅમીવિજયજી મહારાજ સાહેબના શિષ્ય રત્ન પૂજ્ય પન્યાસજી શ્રી ક્ષમાવિજયજી ગણીવર, પન્યાસજી શ્રી મોતીવિજયજી મહારાજ સાહેબના શિષ્ય શ્રી સુમતિ વિજયજી મહારાજ તથા પોતાના ગુરૂભાઇઓ શ્રી ગુણવિજયજી આદિ સાથે મુબઈ પધાર્યા ત્યારથી તેઓએ વૈરાગ્યમયી દેશના દઈ મુબઈના જૈનોને સારો લાભ આપ્યો છે તેઓ એ દીક્ષા તથા અઠ્ઠાઈ મહોત્સવો તથા ભાયખલામાં ૧૦૦ વર્ષ બાદ ધ્વજાદડની ક્રિયા તથા શાન્તિ સ્નાત્રો તથા ઉપધાનની મહાન્ તપની ક્રિયા કરાવી અપૂર્વ આનદ આપી મહાન્ ઉપકાર કર્યો છે તે ઉપરાંત ગયા વર્ષમાં મહામહોપાધ્યાય શ્રી વિનયવિજયજી ગણીકૃત હેમલઘુપ્રક્રિયાની સ્વોપજ્ઞ ટીકા હૈમપ્રકાશ નામે તથા કલિકાલ સર્વજ્ઞ શ્રી હેમચદ્રાચાર્ય વિરચિત શબ્દાનુશાસનની મધ્યમ વૃત્તિ તથા અવચૂરી તથા હેમલિંગાનુશાસન સ્વોપજ્ઞ વિવરણાદિયુત આદિ મહાન વ્યાકરણના ગ્રથો સંપાદન કરવાનુ કાર્ય આરંભ્યુ છે

અમારો પણ મહોપાધ્યાય શ્રી વિનય વિજયજી વિરચિત શાન્ત સુધારસ છપાવવાનો વિચાર થવાથી મહારાજ શ્રીને આગ્રહ કર્યો પણ તેઓએ વ્યાકરણ આદિ મહાન ગ્રથોનુ કામ આરંભેલું હોવાથી ગયા વર્ષમાં તે બની શક્યુ ન હતું પણ આ વરષે અમારા પૂર્ણ ભાગ્યોદયે શાતસુધારસના સપાદનનુ કામ મહારાજ શ્રીજીએ હાથધર્યું અને અમને જણાવતાં હર્ષ થાયછે કે જે ગ્રથ ત્રણ ફરમા જેટલો છપાવવા ધારેલો તે મહારાજ શ્રીના તથા સાધર્મી બધુઓની જ્ઞાન ભક્તિના પ્રતાપે તેની સાથે બીજા પણ ગ્રથો મળતા ૨૦ ફર્મા જેટલો તૈયાર થયો છે અને તે છપાવવામાં નીચેના મારા વડીલ સાધર્મીભાઈઓએ સાથ આપી ભારે પુણ્ય ઉપાર્જન કર્યું છે અને હું પણ આ તકે તેઓ જે ક્રમે સહાયક થતા ગયા તે અનુસારે તેમનું સ્મરણ કરી આભાર માનુ છુ

(શેષભાગ પૃષ્ઠ ૪ ઉપર જુવો.)

## शान्तसुधारसद्वशमप्रकाशस्याष्टमश्लोके सूचितसुखस्य विवेचनम्

'दसविहे सोक्खे पण्णत्ते त जहा–आरोग्ग १ दीहमाऊ २ अड्ढेज्ज ३ काम ४ भोग ५ सतोसे ६ । अत्थि ७ सुहभोग ८ निक्खम्ममेव ९ तत्तो अणाबाहे १० ॥ १ ॥ ( सू० ७३७ श्रीमत्स्थानाङ्गे )

तट्टीका यथा—

दसविहेत्यादि, आरोग्ग गाहा–आरोग्यम्–नीरोगता १ दीर्घमायु –चिरंजीवितम् शुभमितीह विशेषण दृश्यमिति २ अड्ढेज्जत्ति आढ्यत्व धनपतित्व सुखकारणत्वात्सुखम् अथवा आढ्यै क्रियमाणा इज्या पूजा आढ्येज्या प्राकृतत्वादड्ढेज्जत्ति ३ । कामत्ति कामौ–शब्दरूपे सुखकारणत्वात् सुखम् ४ एव भोगेत्ति भोगा –गन्धरसस्पर्शा ५ तथा सतोष –अल्पेच्छता तत्सुखमेव आनदरूपत्वात्सतोपस्य उक्त च– आरोग्गसारिय माणुसत्तण सच्च सारिओ धम्मो । विज्जा निच्छयसारा सुहाइ सतोससाराइ ॥ १ ॥ इति ६ अत्थित्ति येन येन यदा यदा प्रयोजन तत्तत्तदा तदास्ति–भवति जायते इति सुखमानदहेतुत्वादिति ७ सुहभोगत्ति–शुभ अनिन्दितो भोगो विषयेषु भोगक्रियेति स सुखमेव सातोदयसम्पादत्वात्तस्येति ८ तथा निक्खम्ममेवत्ति निष्क्रमण निष्क्रम –अविरतिजम्बालादिति गम्यते प्रव्रज्येत्यर्थं , इह च द्विभावो नपुसकता च प्राकृतत्वात् एवकारोऽवधारणे, अयमर्थं –निष्क्रमणमेव भवस्थानां सुख निराबाधस्वायत्तानदरूपत्वात्, अत एवोच्यते 'दुवालसमास परियाए समणे निग्गथे अणुत्तराण देवाण तेउल्लेस वीइवयइत्ति तथा नैवास्ति राजराजस्य तत्सुख नैव देवराजस्य । यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १ ॥' इति शेष सुखानि हि दु खप्रतीकारमात्रत्वात् सुखाभिमानजनकत्वाच्च तत्त्वतो न सुख भवन्तीति ९ । तत्तो अणाबाहत्ति ततो निष्क्रमणसुखानन्तरं अनाबाध न विद्यते आबाधा–जन्मजरा मरणक्षुत्पिपासादिका यत्र तदनाबाध मोक्षसुखमित्यर्थं , एतदेव च सर्वोत्तमम् यत उक्तम्–

नवि अत्थि माणुसाण त सोक्खं नविय सव्वदेवाण । ज सिद्धाण सोक्ख अव्वाबाह उवगयाण ॥ १ ॥' १० ॥'

## शुद्धिपत्रकम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | २१ | भूरिभागे | भूरिभोगे (?) |
| २५ | ३ | –माणवत् | मानवत् |
| ,, | १० | –मात्रापेक्षाम० | मात्रापेक्षम० |
| ,, | २३ | –मुपचारात् | मुपचारात् |
| ,, | २४ | मन्दमतीस्तु | मन्दमतीँस्तु |
| ,, | २८ | निगमणम् | निगमनम् |
| २६ | ५ | उद्गाद्ध० | उदगाद्ध० |
| ,, | ८ | नोद्गाद्ध० | नोदगाद्ध० |
| ,, | १३ | , | , |
| ,, | २२ | पदार्थो | पदार्थो । |
| २७ | ३ | तदाभासम् | तदाभासम् । |
| २८ | २५ | –गखर० | गलर० |
| ३० | १३ | शिय | धीय |
| ३७ | २३ | सशूल० | सयल० |
| ३९ | ८ | उज्ञिय० | उज्झिय० |
| ३९ | ९ | कल्लण० | कल्लाण |
| ४० | ६ | सव्वणु | सव्वण्णु |
| ,, | १३ | मेहूण० | –मेहुण |
| ,, | १४ | पडिवज्जिउण | पडिवज्जिऊण |
| ,, | २८ | एरिसु० | परिसु० |
| ४५ | ३ | पाउ | पाउ– |
| ५९ | १३ | १३ | ॥ १३ ॥ |
| ६३ | ५ | गुरुद्दिरा० | गुरुरिहा० |
| ६५ | १ | सद्धर्मं० | सद्धर्मं |
| ६५ | १० | –धृतिर्भवति | धृतिना भवति |
| ८० | ३० | वादिभि– | वादिभि– |
| ९० | १० | तद् | तद्– |
| ९८ | ९ | पोठन | पाठेन |
| ११० | २६ | –कूर्वकै | –कूचकै |
| ११७ | २५ | कपाया० | कपाया० |
| १२८ | १२ | अवि कत्ति– | अविकत्ति– |
| १३३ | २८ | मुत्ताण | मुत्तूण |

# अनुक्रमणिका







ॐ नमः सिद्धम् ।

विश्वहितबोधिदायकश्रीधर्मविजय...



महामहोपाध्यायश्रीविनयविजयगणिविरचितः

# श्रीशान्तसुधारसः ।



( शार्दूलविक्रीडित वृत्तम् )

नीरन्ध्रे भवकानने परिगलत्पञ्चाश्रवाम्भोधरे
नानाकर्मलतावितानगहने मोहान्धकारोद्धुरे ।
भ्रान्तानामिह देहिनां हितकृते कारुण्यपुण्यात्मभि-
स्तीर्थेशैः प्रथितास्सुधारसकिरो रम्या गिरः पान्तु वः ॥ १ ॥

( द्रुतविलम्बित वृत्तत्रयम् )

स्फुरति चेतसि भावनया विना, न विदुषामपि शान्तसुधारसः ।
न च सुखं कृशमप्यमुना विना, जगति मोहविषादविषाकुले ॥ २ ॥
यदि भवभ्रमखेदपराङ्मुखम्, यदि च चित्तमनन्तसुखोन्मुखम् ।
शृणुत तत्सुधियः शुभभावना ऽमृ(भृ?)तरसं मम शान्तसुधारसम् ॥ ३ ॥
सुमनसो मनसि श्रुतपावना, निदधतां द्व्यधिकादशभावनाः ।
यदिह रोहति मोहतिरोहिता द्भुतगतिर्विदिता समतालता ॥ ४ ॥

( रथोद्धतावृत्तम् )

आर्तरौद्रपरिणामपावक प्लुष्टभावुकविवेकसौष्ठवे ।
मानसे विषयलोलुपात्मनाम्, क्व प्ररोहतितमां शमाङ्कुरः ॥ ५ ॥

( वसन्ततिलकावृत्तम् )

यस्याशयं श्रुतकृतातिशयं विवेक पीयूषवर्षरमणीयर(तो?)मं श्रयन्ते ।
सद्भावनासुरलता नहि तस्य दूरे, लोकोत्तरप्रशमसौख्यफलप्रसूतिः ६

( अनुष्टुप् वृत्तम् )

अनित्यत्वाशरणते, भवमेकत्वमन्यताम् ।
अशौचमाश्रवं चात्मन्, संवरं परिभावय ॥ ७ ॥

कर्मणो निर्जरां धर्मं सूक्ततां लोकपद्धतिम् ।
बोधिदुर्लभतामेता, भावयन् मुच्यसे भवात् ॥ ८ ॥

(पुष्पिताग्रावृत्तम्)

वपुरिव वपुरिदं विदभ्रलीला परिचितमप्यतिभङ्गुरं नराणाम् ।
तदतिभिदुरयौवनाविनीतम्, भवति कथं विदुषां महोदयाय ॥ ९ ॥

(शार्दूलविक्रीडित वृत्तद्वयम्)

आयुर्वायुतरत्तरङ्गतरलम्, लग्नापदः सम्पदः
सर्वेऽपीन्द्रियगोचराश्च चटुलाः, सन्ध्याभ्ररागादिवत् ।
मित्रस्त्रीस्वजनादिसङ्गमसुखम्, स्वप्नेन्द्रजालोपमम्,
तत्किं वस्तु भवे भवेदिह मुदामालम्बनं यत्सताम् ॥ १० ॥
प्रातर्भ्रातरिहावदातरुचयो ये चेतनाचेतना
दृष्टा विश्वमनःप्रमोदविदुरा भावाः स्वतः सुन्दराः ।
तांस्तत्रैव दिने विपाकविरसान् हा नश्यतः पश्यत
श्चेतः प्रेतहतं जहाति न भवप्रेमानुबन्धं मम ॥ ११ ॥

卐 प्रथमभावनाष्टकम् । रामगिरिरागेण गीयते 卐

मूढ मुह्यसि मुधा मूढ मुह्यसि मुधा, विभवमनुचिन्त्य हृदि सपरिवारम् ।
कुशशिरसि नीरमिव गलदनिलकम्पितम्, विनय जानीहि जीवितमसारम्, मू०
पश्य भङ्गुरमिदं विषयसुखसौहृदम्, पश्यतामेव नश्यति सहासम् ।
एतदनुहरति संसाररूपं रयाज्ज्वलज्जलदबालिकारुचिविलासम्, मू० ॥ २ ॥
हन्त हतयौवनं पुच्छमिव शौवनम्, कुटिलमति तदपि लघुदृष्टनष्टम् ।
तेन बत परवशाः परवशा हतधियः, कटुकमिह किं न कलयन्ति कष्टम्, मू० ३
यदपि पिण्याकतामङ्गमिदमुपगतम्, भुवनदुर्जयजरापीतसारम् ।
तदपि गतलज्जमुज्झति मनो नाङ्गिनाम्, वितथमति कुथितमन्मथविकारम्, मू०
सुखमनुत्तरसुरावधि यदतिमेदुरम्, कालतस्तदपि कलयति विरामम् ।
कतरदितरत्तदा वस्तु सांसारिकम्, स्थिरतरं भवति चिन्तय निकामम्, मू० ५
यैः समं क्रीडिता ये च भृशमीडिता, यैः सहाकृष्महि प्रीतिवादम् ।
तान् जनान् वीक्ष्य बत भस्मभूयङ्गतान्निर्विशङ्काः स्म इति धिक् प्रमादम्, मू०

असकृदुन्मिष्य निमिषन्ति सिन्धूर्मिवच्चेतनाचेतना सर्वभावा ।
इन्द्रजालोपमा स्वजनधनसङ्गमास्तेषु रज्यन्ति मूढस्वभावा, मू० ॥ ७ ॥
कवलयन्नविरत जङ्गमाजङ्गमम्, जगदहो नैव तृप्यति कृतान्त ।
मुखगतान् खादतस्तस्य करतलगतैर्न कथमुपलप्स्यतेऽस्माभिरन्त, मू०॥८॥
नित्यमेक चिदानन्दमयमात्मनो, रूपमभिरूप्य सुखमनुभवेयम ।
प्रशमरसनवसुधापानविनयोत्सवो, भवतु सतत सतामिह भवेऽयम्, मू०॥९

इति श्रीशान्तसुधारसगेयकाव्ये अनित्यभावनाविभावनो नाम प्रथम प्रकाश

(शार्दूलविक्रीडितम्)

ये षट्खण्डमहीमहीनतरसा निर्जित्य बभ्राजिरे,
ये च स्वर्गभुजो भुजोर्जितमदा मेदुर्मुदा मेदुराः ।
तेऽपि क्रूरकृतान्तवक्त्ररदनैर्निर्दल्यमाना हठा-
दत्राणाः शरणाय हा दशदिशः प्रेक्षन्त दीनाननाः ॥ १ ॥

(स्वागतावृत्तम्)

तावदेव मदविभ्रममाली, तावदेव गुणगौरवशाली ।
यावदक्षमकृतान्तकटाक्षैर्नेक्षितो विशरणो नरकीटः ॥ २ ॥

(शिखरिणीवृत्तम्)

प्रतापैर्व्यापन्नं गलितमथ तेजोभिरुदितै-
र्गतं धैर्योद्योगैः श्लथितमथ पुष्टेन वपुषा ।
प्रवृत्तं तद्द्रव्यग्रहणविषये बान्धवजनै-
र्जने कीनाशेन प्रसभमुपनीते निजवशम् ॥ ३ ॥

卐 द्वितीयभावनाष्टकम् । मारुणीरागेण गीयते 卐

स्वजनजनो बहुधा हितकामम्, प्रीतिरसैरभिरामम् ।
मरणदशावशमुपगतवन्तम्, रक्षति कोऽपि न सन्तम् ॥ १ ॥
विनय विधीयता रे श्रीजिनधर्म शरणम ।
अनुसन्धीयता रे शुचितरचरणस्मरणम्, विन० ॥ २ ॥ ध्रुवपदम् ॥
तुरगरथेभनरावृतिकलितम्, दधत बलमस्खलितम्,
हरति यमो नरपतिमपि दीनम्, मैनिक इव लघुमीनम्, विन० ॥३॥

प्रविशति वज्रमये यदि सदने, तृणमथ घटयति वदने ।
तदपि न मुञ्चति हतसमवर्ती, निर्दयपौरुषनर्ती, विन० ॥ ४ ॥
विद्यामन्त्रमहौषधिसेवाम्, सृजतु वशीकृतदेवाम् ।
रसतु रसायनमुपचयकरणम, तदपि न मुञ्चति मरणम्, विन० ॥५॥
वपुषि चिरं निरुणद्धि समीरम, पतति जलधिपरतीरम् ।
शिरसि गिरेरधिरोहति तरसा, तदपि स जीर्यति जरसा, विन०॥६॥
सृजतीमसितशिरोरुहललितम्, मनुजशिरः सितपलितम् ।
को विदधाना भूघनमरसम्, प्रभवति रोद्धुं जरसम्, विन० ॥७॥
उ(तु?)द्यत उग्ररुजा जनकाय, कः स्यात्तत्र सहाय ।
एकोऽनुभवति विधुरुपरागम्, विभजति कोऽपि न भागम्, विन०॥८॥
शरणमेकमनुसर चतुरङ्गम्, परिहर ममतासङ्गम् ।
विनय रचय शिवसौख्यनिधानम्, शान्तसुधारसपानम्, विन० ॥९॥

इति श्रीशान्तसुधारसगेयकाव्ये अशरणभावनाविभावनो नाम द्वितीयः प्रकाशः

(शिखरिणीवृत्तत्रयम्)

इतो लोभः क्षोभं जनयति दुरन्तो दव इवो-
ल्लसँल्लाभाम्भोभिः कथमपि न शक्यः शमयितुम् ।
इतस्तृष्णाऽक्षाणां तुदति मृगतृष्णेव विफला
कथं स्वस्थैः स्थेयं विविधभयभीमे भववने ॥ १ ॥
गलत्येका चिन्ता भवति पुनरन्या तदधिका
मनोवाक्काये हा विकृतिरतिरोषात्तरजसः ।
विपद्गर्तावर्ते झटिति पतयालोः प्रतिपदं
न जन्तोः संसारे भवति कथमप्यर्तिविरतिः ॥ २ ॥
सहित्वा सन्तापानशुचिजननीकुक्षिकुहरे
ततो जन्म प्राप्य प्रचुरतरकष्टक्रमहतः ।
सुखाभासैर्यावत्स्पृशति कथमप्यर्तिविरतिं
जरा तावत्कायं कवलयति मृत्योः सहचरी ॥ ३ ॥

(उपजातिवृत्तम्)

विभ्रान्तचित्तो बत बम्भ्रमीति, पक्षीव रुद्धस्तनुपञ्जरेऽङ्गी ।
नुन्नो नियत्याऽतनुकर्मतन्तु-सन्दानितः सन्निहितान्तकौतुः ॥४॥

( अनुष्टुब्वृत्तम् )

अनन्तान्पुद्गलावर्त्ताननन्तानन्तरूपभृत् ।
अनन्तशो भ्रमत्येव जीवोऽनादिभवार्णवे ॥ ५ ॥

卐 तृतीयभावनाष्टकम् । केदाररागेण गीयते 卐

कलय संसारमतिदारुणम्, जन्ममरणादिभयभीत रे ।
मोहरिपुणेह सगलग्रहम्, प्रतिपदं विपदमुपनीत रे, कल० ॥ १ ॥
स्वजनतनयादिपरिचयगुणै-रिह मुधा बध्यसे मूढ रे ।
प्रतिपदं नवनवैरनुभवैः, परिभवैरसकृदुपगूढ रे, कल० ॥ २ ॥
घटयसि क्वचन मदमुन्नतं, क्वचिदहो हीनतादीन रे ।
प्रतिभवं रूपमपरापरम्, वहसि बत कर्मणाधीन रे, कल० ॥ ३ ॥
जातु शैशवदशापरवशो, जातु तारुण्यमदमत्त रे ।
जातु दुर्जयजराजर्जरो, जातु पितृपतिकरायत्त रे, कल० ॥ ४ ॥
व्रजति तनयोऽपि ननु जनकताम्, तनयतां व्रजति पुनरेष रे ।
भावयन्विकृतिमिति भवगते स्त्यजतमां नृभवशुभशेष रे, कल० ॥५॥
यत्र दुःखार्तिगददवलवै रनुदिनं दह्यसे जीव रे ।
हन्त तत्रैव रज्यसि चिरम्, मोहमदिरामदक्षीब रे, कल० ॥ ६ ॥
दर्शयन् किमपि सुखवैभवम्, संहरंस्तदथ सहसैव रे ।
विप्रलम्भयति शिशुमिव जनम्, कालबटुकोऽयमत्रैव रे, कल० ॥७॥
सकलसंसारभयभेदकम्, जिनवचो मनसि निबधान रे ।
विनय परिणमय निःश्रेयसम्, विहितशमरससुधापान रे, कल० ॥८॥

इति श्रीशान्तसुधारसगेयकाव्ये संसारभावनाविभावनो नाम तृतीयः प्रकाशः

( स्वागतावृत्तम् )

एक एव भगवानयमात्मा, ज्ञानदर्शनतरङ्गसरङ्गः ।
सर्वमन्यदुपकल्पितमेतद्, व्याकुलीकरणमेव ममत्वम् ॥ १ ॥

( प्रबोधतावृत्तद्वयम् )

अबुधैः परभावलालसा-लसदज्ञानदशावशात्मभिः ।
परवस्तुषु हा स्वकीयता, विषयावेशवशाद्विकल्प्यते ॥ २ ॥

कृतिना दयितेति चिन्तनम्, परदारेषु यथा विपत्तये ।
विविधार्तिभयावहं तथा, परभावेषु ममत्वभावनम् ॥ ३ ॥
अधुना परभावसंवृतिं हर चेतः परितोऽवगुण्ठिताम् ।
क्षणमात्मविचारचन्दन द्रुमवातोर्मिरसाः स्पृशन्तु माम् ॥ ४ ॥

( अनुष्टुप् वृत्तम् )

एकतां समतोपेता मेनामात्मन् विभावय ।
लभस्व परमानन्द सम्पद नमिराजवत् ॥ ५ ॥

卐 चतुर्थभावनाष्टकम् । परजीयारागेण गीयते 卐

विनय चिन्तय वस्तुतत्त्वम्, जगति निज-मिह कस्य किम् ।
भवति मतिरिति यस्य हृदये, दुरितमुदयति तस्य किम्, विन०॥१॥
एक उत्पद्यते तनुमा-नेक एव विपद्यते ।
एक एव हि कर्म चिनुते, सैककः फलमश्नुते, विन० ॥ २ ॥
यस्य यावान् परपरिग्रह, विविधममतावीवध ।
जलधिविनिहितपोतयुक्तया, पतति तावदसावध, विन० ॥ ३ ॥
स्वस्वभाव मद्यमुदितो, भुवि विलुप्य विचेष्टते ।
दृश्यता परभावघटनात्, पतति विलुठति जृम्भते, विन० ॥ ४ ॥
पश्य काञ्चनमितरपुद्गल मिलितमञ्चति का दशाम् ।
केवलस्य तु तस्य रूपम्, विदितमेव भवादृशाम्, विन० ॥ ५ ॥
एवमात्मनि कर्मवशतो, भवति रूपमनेकधा ।
कर्ममलरहिते तु भगवति, भासते काञ्चनविधा, विन० ॥ ६ ॥
ज्ञानदर्शनचरणपर्यवपरिवृत परमेश्वर ।
एक एवानुभवसदने, स रमतामविनश्वर , विन० ॥ ७ ॥
रुचिरसमतामृतरस क्षण मुदितमास्वादय मुदा ।
विनय विषयातीतसुखरस रतिरुदञ्चतु ते सदा, विन० ॥ ८ ॥

इति श्रीशान्तसुधारसगेयकाव्ये एकत्वभावनाविभावनो नाम चतुर्थ प्रकाश

---

( उपजातिवृत्तम् )

परः प्रविष्टः कुरुते विनाशम्, लोकोक्तिरेषा, न मृषेति मन्ये ।
निर्विश्य कर्माणुभिरस्य,-किं किम्, ज्ञानात्मनो नो समपादि कष्टम् १

( स्वागतावृत्तम् )

खिद्यसे ननु किमन्यकथार्तः, सर्वदैव ममतापरतन्त्रः ।
चिन्तयस्यनुपमान्कथमात्मन्नात्मनो गुणमणीन्न कदापि ॥ २ ॥

( शार्दूलविक्रीडित वृत्तद्वयम् )

यस्मै त्वं यतसे बिभेषि च यतो यत्रानिशं मोदसे
यद्यच्छोचसि यद्यदिच्छसि हृदा यत्प्राप्य पेप्रीयसे ।
स्निग्धो येषु निजस्वभावममलं निर्लोठ्य लालप्यसे
तत्सर्वं परकीयमेव भगवन्नात्मन्न किञ्चित्तव ॥ ३ ॥
दुष्टाः कष्टकदर्थनाः कति न ताः सोढास्त्वया संसृतौ
तिर्यङ्नारकयोनिषु प्रतिहतश्छिन्नो विभिन्नो मुहुः ।
सर्वं तत्परकीयदुर्विलसितं विस्मृत्य तेष्वेव हा
रज्यन्मुह्यसि मूढतामुपचरन्नात्मन्न किं लज्जसे ॥ ४ ॥

( अनुष्टुब् वृत्तम् )

ज्ञानदर्शनचारित्रकेतना चेतना विना ।
सर्वमन्यद्विनिश्चित्य यतस्व स्वहिताप्तये ॥ ५ ॥

卐 पञ्चममान्यत्वभावनाष्टकम् । श्रीरागेण गीयते 卐

विनय निभालय निजभवनम्, तनुधनसुतसदन-
स्वजनादिषु, किं निजमिह कुगतेरवनम्, विन० ॥ १ ॥
येन सहाश्रयसेऽतिविमोहादिदमहमित्यविभेदम् ।
तदपि शरीरं नियतमधीरम्, त्यजति भवन्तं धृतखेदम्, विन० ॥२॥
जन्मनि जन्मनि विविधपरिग्रहमुपचिनुषे च कुटुम्बम् ।
तेषु भवन्तं परभवगमने, नानुसरति कृशमपि शुम्बम्, विन० ॥३॥
त्यज ममतापरितापनिदानम्, परपरिचयपरिणामम् ।
भज निःसङ्गतया विशदीकृत-मनुभवसुखरससमभिरामम्, विन० ॥४॥
पथि पथि विविधपथैः पथिकैः सह, कुरुते कः प्रतिबन्धम् ।
निजनिजकर्मवशैः स्वजनैः सह, किं कुरुषे ममताबन्धम्, विन० ॥५॥
प्रणयविहीने दधदभिषङ्गम्, सहते बहुसन्तापम् ।

त्वयि नि प्रणये पुद्गलनिचये, वहसि मुधा ममतातापम्, विन० ॥
त्यज संयोग नियतवियोगम्, कुरु निर्मलमवधानम् ।
न हि विदधान कथमपि तृप्यसि, मृगतृष्णाघनरसपानम्, विन०॥
भज जिनपतिमसहायसहायम्, शिवगतिसुगमोपायम् ।
पिब गदशमन परिहृतवमनम्, शान्तसुधारसमनपायम्, विन० ॥

इति श्रीशान्तसुधारसगेयकाव्ये अन्यत्वभावनाविभावनो नाम पञ्चम प्रकाश

(शार्दूलविक्रीडित वृत्तम्)

सच्छिद्रो मदिराघटः परिगलत्तल्लेशसङ्गाशुचिः
शुच्यामृद्य मृदा बहि' स बहुशो धौतोऽपि गङ्गोदकैः ।
नाधत्ते शुचितां यथा तनुभृतां कायो निकायो महा-
बीभत्सास्थिपुरीपमूत्ररजसां नाय तथा शुद्ध्यति ॥ १ ॥

(मन्दाक्रान्तावृत्तम्)

स्नाय स्नाय पुनरपि पुनः स्नान्ति शुद्धाभिरद्भि-
र्वार वार बत समलतनु चन्दनैरर्चयन्ते ।
मूढात्मानो वयमपमला' प्रीतिमित्याश्रयन्ते
नो शु(बुद्ध्य?)ध्यन्ते कथमवकरः शक्यते शोद्धुमेवम् ॥ २

(शार्दूलविक्रीडित वृत्तम्)

कर्पूरादिभिरर्चितोऽपि लशुनो नो गाहते सौरभ,
नाजन्मोपकृतोऽपि हन्त पिशुनः सौजन्यमालम्बते ।
देहोऽप्येष तथा जहाति न नृणां स्वाभाविकीं विस्रता,
नाभ्यक्तोऽपि विभूषितोऽपि बहुधा पुष्टोऽपि विश्वस्यते ॥ ३ ॥

(उपेन्द्रवज्रावृत्तम्)

यदीयसंसर्गमवाप्य सद्यो भवेच्छुचीनामशुचित्वमुच्चैः ।
अमेध्ययोनेर्वपुषोऽस्य शौचसङ्कल्पमोहोऽयमहो महीयान् ॥ ४ ॥

(स्वागतावृत्तम्)

इत्यवेत्य शुचिवादमतथ्यम्, पथ्यमेव जगदेकपवित्रम् ।
शोधन सकलदोषमलानाम्, धर्ममेव हृदये निदधीथाः ॥ ५ ॥

卐 षष्ठभावनाष्टकम् । आसानरीरागेण गीयते 卐

भावय रे वपुरिदमतिमलिनम्, विनय विबोधय मानसनलिनम् ।
मानवमनुचिन्तय विमुमेकम्, परममहोदयमुदितविवेकम्, भाव० ॥ १ ॥
दम्पतिरेतोरुधिरविवर्ते, किं शुभमिह मलकश्मलगर्ते ।
भृशमपि पिहितं स्रवति विरूपम्, को बहु मनुतेऽवस्करकूपम्, भाव० ॥२॥
भजति सचन्द्रं शुचिताम्बूलम्, कर्तुं मुखमारुतमनुकूलम् ।
तिष्ठति सुरभि कियन्तं कालम्, मुखमसुगन्धि जुगुप्सितलालम्, भाव०॥३॥
असुरभिगन्धवहोऽन्तरचा(वा?)री, आवरितुं शक्यो न विकारी ।
वपुरुपजिघ्रसि वारंवारम्, हसति बुधस्तव शौचाचारम्, भाव० ॥ ४ ॥
द्वादश नव रन्ध्राणि निकामम्, गलदशुचीनि न यान्ति विरामम् ।
यत्र वपुषि तत्कलयसि पूतम्, मन्ये तव नूतनमाकूतम्, भाव० ॥ ५ ॥
अशितमुपस्करसंस्कृतमन्नम्, जगति जुगुप्सां जनयति हन्नम् ।
पुंसवनं धैनवमपि लीढम्, भवति विगर्हितमति जनमीढम्, भाव० ॥६॥
केवलमलमयपुद्गलनिचये अशुचीकृतशुचिभोजनसिचये ।
वपुषि विचिन्तय परमिह सारम्, शिवसाधनसामर्थ्यमुदारम्, भाव० ॥७॥
येन विराजितमिदमतिपुण्यम्, तच्चिन्तय चेतन नैपुण्यम् ।
विशदागममधिगम्य निपानम्, विरचय शान्तसुधारसपानम्, भाव० ॥८॥

इति श्रीशान्तसुधारसगेयकाव्ये अशौचभावनाविभावनो नाम षष्ठ प्रकाश

---

( भुजङ्गप्रयात वृत्तम् )

यथा सर्वतो निर्झरैरापतद्भिः, प्रपूर्येत सद्यः पयोभिस्तटाकः ।
तथैवाश्रवैः कर्मभिः सम्भृतोऽङ्गी, भवेद्व्याकुलश्चञ्चलः पङ्किलश्च ॥१॥

( शार्दूलविक्रीडित वृत्तम् )

यावत्किञ्चिदिवानुभूय तरसा कर्मेह निर्जीर्यते
तावच्चाश्रवशत्रवोऽनुसमयं सिञ्चन्ति भूयोऽपि तत् ।
हा कष्टं कथमाश्रवप्रतिभटाः शक्या निरोद्धुं मया
संसारादतिभीषणान्मम हहा मुक्तिः कथं भाविनी ॥ २ ॥

( प्रहर्षणीवृत्तम् )

मिथ्यात्वाविरतिकषाययोगसंज्ञाश्चत्वारः सुकृतिभिराश्रवाः प्रदिष्टाः
कर्माणि प्रतिसमयं स्फुटैरमीभिर्बध्नन्तो भ्रमवशतो भ्रमन्ति जीवाः ॥

( रथोद्धतावृत्तम् )

इन्द्रियाव्रतकषाययोगजाः, पञ्च पञ्च चतुरन्वितास्त्रयः ।
पञ्चविंशतिरसत्क्रिया इति, नेत्रवेदपरिसङ्ख्ययाऽप्यमी ॥ ४ ॥

( इन्द्रवज्रावृत्तम् )

इत्याश्रवाणामधिगम्य तत्त्वम्, निश्चित्य सत्त्वं श्रुतिसन्निधानात् ।
एषां निरोधे विगलद्विरोधे सर्वात्मना द्राग् यतितव्यमात्मन् ॥ ५ ॥

卐 सप्तमभावनाष्टकम् । धनाश्रीरागेण गीयते 卐

परिहरणीया रे, सुकृतिभिराश्रवा, हृदि समतामवधाय ।
प्रभवन्त्येते रे, भृशमुच्छृङ्खला, विभुगुणविभवबधाय, परि० ॥ १ ॥
कुगुरुनियुक्ता रे, कुमतिपरिप्लुता , शिवपुरपथमपहाय ।
प्रयतन्तेऽमी रे, क्रियया दुष्टया, प्रत्युत शिवविरहाय, परि० ॥ २ ॥
अविरतचित्ता रे, विषयवशीकृता, विषहन्ते विततानि ।
इह परलोके रे, कर्मविपाकजान्यविरतदुःखशतानि, परि० ॥ ३ ॥
करिझषमधुपा रे, शलभमृगादयो, विषयविनोदरसेन ।
हन्त लभन्ते रे, विविधा वेदना, बत परिणतिविरसेन, परि० ॥ ४ ॥
उदितकषाया रे, विषयवशीकृता, यान्ति महानरकेषु ।
परिवर्तन्ते रे, नियतमनन्तशो, जन्मजरामरणेषु, परि० ॥ ५ ॥
मनसा वाचा रे, वपुषा चञ्चला, दुर्जयदुरितभरेण ।
उपलिप्यन्ते रे, तत आश्रवजये, यततां कृतमपरेण, परि० ॥ ६ ॥
शुद्धा योगा रे, यदपि यतात्मनाम्, स्रवन्ते शुभकर्माणि ।
काञ्चननिगडांस्तान्यपि जानीयात्, हतनिर्वृतिशर्माणि, परि० ॥ ७ ॥
मोदस्वैवं रे, साश्रवपाप्मनाम्, रोधे धियमाधाय ।
शान्तसुधारसपानमनारतम्, विनय विधाय विधाय, परि० ॥ ८ ॥

इति श्रीशान्तसुधारसगेयकाव्ये आश्रवभावनाविभावनो नाम सप्तमः प्रकाशः

( स्वागतावृत्तद्वयम् )

येन येन य इहाश्रवरोधः, सम्भवेन्नियतमौपयिकेन ।
आद्रियस्व विनयोद्यतचेतास्तत्तदान्तरदृशा परिभाव्य ॥ १ ॥
संयमेन विषयाविरतत्वे, दर्शनेन वितथाभिनिवेशम् ।
ध्यानमार्तमथ रौद्रमजस्रम्, चेतसः स्थिरतया च निरुन्ध्याः ॥ २ ॥

( शालिनीवृत्तम् )

क्रोधं क्षान्त्या मार्दवेनाभिमानम्, हन्या मायामार्जवेनोज्ज्वलेन ।
लोभं वाराराशि रौद्रं निरुन्ध्याः, सन्तोषेण प्रांशुना सेतुनेव ॥ ३ ॥

( स्वागतावृत्तम् )

गुप्तिभिस्तिसृभिरेवमजय्यान्, त्रीन् विजित्य तरसाधमयोगान् ।
साधुसंवरपथे प्रयतेथा, लप्स्यसे हितमनीहितमिद्धम् ॥ ४ ॥

( मन्दाक्रान्तावृत्तम् )

एवं रुद्धेष्वमलहृदयैराश्रवेष्वाप्तवाक्य-
श्रद्धाचञ्चत्सितपटपटुः सुप्रतिष्ठानशाली ।
शुद्धैर्योगैर्जवनपवनैः प्रेरितो जीवपोतः
स्रोतस्तीर्त्वा भवजलनिधेर्याति निर्वाणपुर्याम् ॥ ५ ॥

卐 अष्टमभावनाष्टकम् । नटरागेण गीयते 卐

शृणु शिवसुखसाधनसदुपायम्, सदुपाय रे सदु०
शृणु शिवसुखसाधनसदुपायम् ।
ज्ञानादिकपावनरत्नत्रय-परमाराधनमनपायम्, शृणु० ॥ १ ॥
विषयविकारमपाकुरु दूरम्, क्रोधं मानं सह मायम् ।
लोभरिपुं च विजित्य सहेलम्, भज संयमगुणमकषायम्, शृणु० ॥२॥
उपशमरसमनुशीलय मनसा, रोषदहनजलदप्रायम् ।
कलय विरागं धृतपरभागम्, हृदि विनय नायं नायम्, शृणु० ॥३॥
आर्तं रौद्रं ध्यानं मार्जय, दह विकल्परचनाऽऽनायम् ।
यदियमरुद्धा मानसवीथी, तत्त्वविदः पन्था नाऽयम्, शृणु० ॥ ४ ॥
संयमयोगैरवहितमानस-शुद्ध्या चरितार्थय कायम् ।
नानामतरुचिगहने भुवने, निश्चिनु शुद्धपथं नायम्, शृणु० ॥ ५ ॥

प्रशमरतमङ्गीकुरु निर्मलम्, बिभ्राण गुणसमवायम् ।
उदित गुरुवदनादुपदेशम्, सङ्गृहाण शुचिमिव रायम्, शृणु० ॥ ६ ॥
संयमवाङ्मयकुसुमरसैरति-सुरभय निजमध्यवसायम् ।
चेतनमुपलक्षय कृतलक्षण ज्ञानचरणगुणपर्यायम्, शृणु० ॥ ७ ॥
वदनमलङ्कुरु पावनरसनम्, जिनचरित गाय गायम् ।
सविनय शान्तिसुधारसमेनम्, चिर नन्द पाय पायम्, शृणु० ॥८॥

इति श्रीशान्तसुधारसगेयकाव्ये संवरभावनाविभावनो नाम अष्टम प्रकाश

---

(इन्द्रवज्रावृत्तम्)

यन्निर्जरा द्वादशधा निरुक्ता, तद्द्वादशानां तपसां विभेदात् ।
हेतुप्रभेदादिह कार्यभेदः, स्वातन्त्र्यतस्त्वेकविधैव सा स्यात् ॥ १ ॥

(अनुष्टुब्वृत्तद्वयम्)

काष्ठोपलादिरूपाणां निदानानां विभेदतः ।
वह्निर्यथैकरूपोऽपि, पृथग्रूपो विवक्ष्यते ॥ २ ॥
निर्जरापि द्वादशधा, तपोभेदैस्तथोदिता ।
कर्मनिर्जरणात्मा तु, सैकरूपैव वस्तुतः ॥ ३ ॥

(उपेन्द्रवज्रावृत्तम्)

निकाचितानामपि कर्मणां यद्, गरीयसां भूधरदुर्धराणाम् ।
विभेदने वज्रमिवातितीव्रम्, नमोऽस्तु तस्मै तपसेऽद्भुताय ॥ ४ ॥

(उपजातिवृत्तम्)

किमुच्यते सत्तपसः प्रभावः, कठोरकर्मार्जितकिल्बिषोऽपि ।
दृढप्रहारीव निहत्य पापम्, यतोऽपवर्गं लभतेऽचिरेण ॥ ५ ॥
यथा सुवर्णस्य शुचिस्वरूपम्, दीप्तः कृशानुः प्रकटीकरोति ।
तथात्मनः कर्मरजो निहत्य, ज्योतिस्तपस्तद्विशदीकरोति ॥ ६ ॥

(स्रग्धरावृत्तम्)

बाह्येनाभ्यन्तरेण प्रथितबहुभिदा जीयते येन शत्रु-
श्रेणी बाह्यान्तरङ्गा भरतनृपतिवद्भावलब्धद्रढिम्ना ।
यस्मात्प्रादुर्भवेयुः प्रकटितविभवा लब्धयः सिद्धयश्च
वन्दे स्वर्गापवर्गार्पणपटुसततं तत्तपो विश्ववन्द्यम् ॥ ७ ॥

卐 अथ नवमभावनाष्टकम् । सारंगरागेण गीयते 卐

विभावय विनय तपोमहिमानम्, ध्रुवपदम्,
बहुभवसञ्चितदुष्कृतममुना, लभते लघु लघिमानम्, विभा० ॥ १ ॥
याति घनाऽपि घनाघनपटली, खरपवनेन विरामम् ।
भजति तथा तपसा दुरितालो, क्षणभङ्गुरपरिणामम्, विभा० ॥ २ ॥
वाञ्छितमायाति दूरादपि, रिपुमपि व्रजति वयस्यम् ।
तप इदमाश्रय निर्मलभावादागमपरमरहस्यम्, विभा० ॥ ३ ॥
अनशनमूनोदरता वृत्ति-ह्रास रसपरिहारम् ।
भज सालीन्य कायक्लेशम्, तप इति बाह्यमुदारम्, विभा० ॥ ४ ॥
प्रायश्चित्त वैयावृत्यम्, स्वाध्याय विनय च ।
कायोत्सर्ग शुभध्यानम्, आभ्यन्तरमिदम च, विभा० ॥ ५ ॥
शमयति ताप गमयति पापम्, रमयति मानसहसम् ।
हरति विमोह दूरारोहम्, तप इति विगताशसम्, विभा० ॥ ६ ॥
सयमकमलाकार्मणमुज्ज्वल शिवसुखसत्यङ्कारम् ।
चिन्तितचिन्तामणि माराधय तप इह वारवारम्, विभा० ॥ ७ ॥
कर्मगदौषधमिदमिदमस्य च, जिनपतिमतमनुपानम् ।
विनय समाचर सौख्यनिधानम्, शान्तसुधारसपानम्, विभा० ॥८॥

इति श्रीशान्तसुधारसगेयकाव्ये निर्जराभावनाविभावनो नाम नवम प्रकाश

---

(उपजातिवृत्तम्)

दान च शीलं च तपश्च भावो, धर्मश्चतुर्धा जिनबान्धवेन ।
निरूपितो यो जगतां हिताय, स मानसे मे रमतामजस्रम् ॥ १ ॥

(इन्द्रवज्रावृत्तत्रयम्)

सत्यक्षमामार्दवशौचसङ्गत्यागार्ऽऽर्जवब्रह्मविमुक्तियुक्तः ।
यः सयमः किं च तपोऽवगूढश्चारित्रधर्मो दशधाऽयमुक्तः ॥ २ ॥
यस्य प्रभावादिह पुष्पदन्तौ, विश्वोपकाराय सदोदयेते ।
ग्रीष्मोष्मभीष्मामुदितस्तडित्वान्, कालेसमाश्वासयति क्षितिं च ॥३॥

उल्लोलकल्लोलफलाविलासैर्नप्लावयत्यम्बुनिधिः क्षितिं यद् ।
न घ्नन्ति यद्व्याघ्रमरुद्दवाद्या, धर्मस्य सर्वोऽप्यनुभाव एषः ॥ ४ ॥

( शार्दूलविक्रीडित वृत्तम् )

यस्मिन्नैव पिता हिताय यतते, भ्राता च माता सुतः
सैन्यं दैन्यमुपैति चापचपलम्, यत्राऽफलं दोर्बलम् ।
तस्मिन् कष्टदशाविपाकसमये, धर्मस्तु सर्वंसित'
सज्जः सज्जन एष सर्वजगत स्त्राणाय बद्धोद्यमः ॥ ५ ॥
त्रैलोक्यं सचराचरं विजयते यस्य प्रसादा(भावा?)दिदम्,
योऽत्राऽमुत्र हितावहस्तनुभृतां सर्वार्थसिद्धिप्रदः ।
येनानर्थकदर्थना निजमहःसामर्थ्यतो व्यर्थिता
तस्मै कारुणिकाय धर्मविभवे, भक्तिप्रणामोऽस्तु मे ॥ ६ ॥

( मन्दाक्रान्तावृत्तम् )

प्राज्यं राज्यं सुभगदयिता, नन्दना नन्दनानाम्,
रम्यं रूपं सरसकविता चातुरी सुस्वरत्वम् ।
नीरोगत्वं गुणपरिचयः, सज्जनत्वं सुबुद्धिम्
किं नु ब्रूमः फलपरिणतिम्, धर्मकल्पद्रुमस्य ॥ ७ ॥

卐 अथ दशमभावनाष्टकम् । वसन्तरागेण गीयते 卐

पालय पालय रे पालय मां जिनधर्म ।
मङ्गलकमलाकेलिनिकेतन, करुणाकेतन धीर ।
शिवसुखसाधन भवभयबाधन, जगदाधार गम्भीर, पाल० ॥ १ ॥
सिञ्चति पयसा जलधरपटली, भूतलममृतमयेन ।
सूर्याचन्द्रमसावुदयेते, तव महिमातिशयेन, पाल० ॥ २ ॥
निरालम्बमियमसदाधारा, तिष्ठति वसुधा येन ।
तं विश्वस्थितिमूलस्तम्भम्, त्वां सेवे विनयेन, पाल० ॥ ३ ॥
दानशीलशुभभावतपोमुख चरितार्थीकृतलोक ।
शरणस्मरणकृतामिह भविनाम्, दूरीकृतभयशोक, पाल० ॥ ४ ॥

क्षमामत्यसन्तोषदयादिकसुभगसकलपरिवार ।
देवासुरनरपूजितशासन कृतबहुभवपरिहार, पाल० ॥ ५ ॥
बन्धुरबन्धुजनस्य दिवानिश मसहायस्य सहाय ।
भ्राम्यति भीमे भवगहनेऽङ्गी, त्वां बान्धवमपहाय, पाल० ॥ ६ ॥
द्रङ्गति गहन जलति कृशानु, स्थलति जलधिरचिरेण ।
तव कृपयाखिलकामितसिद्धिर्बहुना किं नु परेण, पाल० ॥ ७ ॥
इह यच्छसि सुखमुदितदशाङ्गम्, प्रेत्येन्द्रादिपदानि ।
क्रमतो ज्ञानादीनि च वितरसि, निःश्रेयससुखदानि, पाल० ॥ ८ ॥
सर्वतन्त्रनवनीत सनातन, सिद्धिसदनसोपान ।
जय जय विनयवतां प्रतिलम्भित शान्तसुधारसपान, पाल० ॥ ९ ॥

इति श्रीशान्तसुधारसगेयकाव्ये धर्मभावनाविभावनो नाम दशमः प्रकाशः

(शालिनीवृत्तम्)

सप्ताधोऽधो विस्तृता याः पृथिव्यश्छत्राकाराः सन्ति रत्नप्रभाद्याः ।
ताभिः पूर्णो योऽस्त्यधोलोक एतौ, पादौ यस्य व्यायतौ सप्तरज्जू ॥१॥
तिर्यग्लोको विस्तृतो रज्जुमेकाम्, पूर्णो द्वीपैरर्णवान्तैरसङ्ख्यैः ।
यस्य ज्योतिश्चक्रकाञ्चीकलापम्, मध्ये कार्श्यं श्रीविचित्रं कटित्रम् ॥२॥
लोकोऽथोर्ध्वे ब्रह्मलोके द्युलोके, यस्य व्याप्तौ कूर्परौ पञ्चरज्जू ।
लोकस्यान्तो विस्तृतो रज्जुमेकाम्, सिद्धज्योतिश्चित्रको यस्य मौलिः ३
यो वैशाखस्थानकस्थायिपादः, श्रोणीदेशे न्यस्तहस्तद्वयश्च ।
कालेऽनादौ शश्वदूर्ध्वन्दमत्वाद्, बिभ्राणोऽपि श्रान्तमुद्रामखिन्नः ॥ ४
सोऽयं ज्ञेयः पूरुषो लोकनामा, षड्द्रव्यात्माऽकृत्रिमोऽनाद्यनन्तः ।
धर्माधर्माकाशकालात्मसञ्ज्ञैर्द्रव्यैः, पूर्णः सर्वतः पुद्गलैश्च ॥ ५ ॥
रङ्गस्थानं पुद्गलानां नटानाम्, नानारूपैर्नृत्यतामात्मना च ।
कालोद्योगस्वस्वभावादिभावैः, कर्मातोद्यैर्नर्तितानां नियत्या ॥ ६ ॥
एवं लोको भाव्यमानो विविक्त्या, विज्ञाना स्यान्मानसस्थैर्यहेतुः ।
स्थैर्यं प्राप्ते मानसे चात्मनीना, सुप्राप्यैवाध्यात्मसौख्यप्रसूतिः ॥ ७ ॥

卐 एकादशभावनाष्टकम् । काफीरागेण गीयते 卐

विनय विभावय शाश्वतम्, हृदि लोकाकाशम् ।
सकलचराचरधारणे, परिणमदवकाशम्, विन० ॥ १ ॥
लसदलोकपरिवेष्टितम्, गणनातिगमानम् ।
पञ्चभिरपि धर्मादिभि, सुघटितसीमानम्, विन० ॥ २ ॥
समवघातसमये जिने, परिपूरितदेहम् ।
असुमदणुकविविधक्रिया–गुणगौरवगेहम्, विन० ॥ ३ ॥
एकरूपमपि पुद्गलैः कृतविविधविवर्तम् ।
काञ्चनशैलशिखरोन्नतम्, क्वचिदवनतगर्तम्, विन० ॥ ४ ॥
क्वचन तविषमणिमन्दिरै–रुदितोदितरूपम् ।
घोरतिमिरनरकादिभि क्वचनातिविरूपम, विन० ॥ ५ ॥
क्वचिदुत्सवमयमुज्ज्वलम, जयमङ्गलनादम ।
क्वचिदमन्दहाहारवम्, पृथुशोकविषादम्, विन० ॥ ६ ॥
बहुपरिचितमनन्तशो, निखिलैरपि सत्त्वै ।
जन्ममरणपरिवर्तिभि, कृतमुक्तममत्वै विन० ॥ ७ ॥
इह पर्यटनपराङ्मुखा, प्रणमत भगवन्तम् ।
शान्तसुधारसपानतो, धृतविनयमवन्तम्, विन० ॥ ८ ॥

इतिश्रीशान्तसुधारसगेयकाव्ये लोकस्वरूपभावनाविभावनो नाम एकादश प्रकाश

---

(मन्दाक्रान्तावृत्तम्)

यस्माद्विस्मापयितसुमनःस्वर्गसम्पद्विलासाः
प्राप्तोल्लासाः पुनरपि जनिः सत्कुले भूरिभोगे ।
ब्रह्माद्वैतप्रगुणपदवीप्रापकं नि सपत्नम्,
तद्दुष्प्रापं भृशमुरुधियः सेव्यतां बोधिरत्नम् ॥ १ ॥

(भुजङ्गप्रयातवृत्तद्वयम्)

अनादौ निगोदान्धकूपे स्थिताना–मजस्रं जनुर्मृत्युदुःखार्दितानाम् ।
परीणामशुद्धिः कुतस्तादृशी स्याद्, यया हन्त तस्माद्विनिर्यान्ति जीवाः

ततो निर्गतानामपि स्थावरत्वम्, त्रसत्वं पुनर्दुर्लभं देहभाजाम् ।
त्रसत्वेऽपि पञ्चाक्षपर्याप्तसंज्ञि-स्थिरायुष्यवद्दुर्लभं मानुषत्वम् ॥ ३ ॥
तदेतन्मनुष्यत्वमाप्यापि मूढो महामोहमिथ्यात्वमायोपगूढः ।
भ्रमन् दूरमग्नो भवागाधगर्ते, पुनः क्व प्रपद्येत तद्बोधिरत्नम् ॥ ४ ॥

( शिखरिणीवृत्तम् )

विभिन्नाः पन्थानः, प्रतिपदमनल्पाश्च मतिनः
कुयुक्तिव्यासङ्गैर्निजनिजमतोल्लासरसिकाः ।
न देवाः सांनिध्यं विदधति, न वा कोऽप्यतिशय-
स्तदेवं कालेऽस्मिन्, य इह दृढधर्मा स सुकृती ॥ ५ ॥

( शार्दूलविक्रीडितवृत्तम् )

यावद्देहमिदं गदैर्न मृदितम्, नो वा जराजर्जरम्
यावत्त्वक्षकदम्बकं स्वविषयज्ञानावगाहक्षमम् ।
यावच्चायुरभङ्गुरं निजहिते तावद्बुधैर्यत्यताम्
कासारे स्फुटिते जले प्रचलिते, पालिः कथं बध्यते ॥ ६ ॥

( अनुष्टुब्वृत्तम् )

विविधोपद्रवं देह-मायुश्च क्षणभङ्गुरम् ।
कामालम्ब्य धृतिं मूढैः, स्वश्रेयसि विलम्ब्यते ॥ ७ ॥

卐 अथ द्वादशभावनाष्टकम् । धनश्रीरागेण गीयते 卐

बुध्यतां बुध्यतां बोधिरतिदुर्लभा, जलधिजलपतितसुररत्नयुक्त्या ।
सम्यगाराध्यतां स्वहितमिह साध्यताम्, बाध्यतामधरगतिरात्मशक्त्या, बुध्य० ॥ १ ॥
चक्रिभोज्यादिरिव नरभवो दुर्लभो, भ्राम्यतां घोरसंसारकक्षे ।
बहुनिगोदादिकायस्थितिव्यायते, मोहमिथ्यात्वमुखचोरलक्षे बुध्य० ॥ २ ॥
लब्ध इह नरभवोऽनार्यदेशेषु यः, स भवति प्रत्युतानर्थकारी ।
जीवहिंसादिपापाश्रवव्यसनिनाम्, माघवत्यादिमार्गानुसारी, बुध्य० ॥३॥
आर्यदेशस्पृशामपि सुकुलजन्मनाम्, दुर्लभा विविदिषा धर्मतत्त्वे ।
रतपरिग्रहभयाहारसंज्ञार्तिभिर्हन्त मग्नं जगद् दुःस्थितत्वे, बुध्य० ॥ ४ ॥
विविदिषायामपि श्रवणमतिदुर्लभम्, धर्मशास्त्रस्य गुरुसन्निधाने ।

वितथविकथादितत्तद्रसावेशतो, विविधविक्षेपमलिनेऽनधाने, बुध्य० ॥५॥
धर्ममाकर्ण्य सम्बुध्य तत्रोद्यमम्, कुर्वतो वैरिवर्गोऽन्तरङ्ग ।
रागद्वेषश्रमालस्यनिद्रादिको, बाधते निहतसुकृतप्रसङ्ग , बुध्य० ॥ ६ ॥
चतुरशीतावहो योनिलक्षेष्वियम्, क्व त्वयाकर्णिता धर्मवार्ता ॥
प्रायशो जगति जनता मिथो विवदते, ऋद्धिरसशातगुरुगौरवार्ता,बुध्य०॥७॥
एवमतिदुर्लभात्प्राप्य दुर्लभतमम्, बोधिरत्न सकलगुणनिधानम् ।
कुरु गुरुप्राज्यविनयप्रसादोदितम्, शान्तरससरसपीयूषपानम्, बुध्य०॥८॥

इति श्रीशान्तसुधारसगेयकाव्ये बोधिदुर्लभभावनाविभावनो नाम द्वादश प्रकाश



(अनुष्टुब्वृत्तम्)

सद्धर्मध्यानसध्यान हेतवः श्रीजिनेश्वरैः ।
मैत्रीप्रभृतयः प्रोक्ताश्चतस्रो भावनाः पराः ॥ १ ॥
तथाहु –मैत्रीप्रमोदकारुण्य-माध्यस्थ्यानि नियोजयेत् ।
धर्मध्यानमुपस्कर्तुम्, तद्धि तस्य रसायनम् ॥ २ ॥

(उपजातिवृत्तम्)

मैत्री परेषा हितचिन्तन यद् भवेत्प्रमोदो गुणपक्षपातः ।
कारुण्यमार्ताङ्गिरुजां जिहीर्षे-त्युपेक्षण दुष्टधियामुपेक्षा ॥ ३ ॥
सर्वत्र मैत्रीमुपकल्पयात्मन्, चिन्त्यो जगत्यत्र न कोऽपि शत्रुः ।
कियद्दिनस्थायिनि जीवितेऽस्मिन्, कि खिद्यते वैरिधिया परस्मिन् ४
सर्वेऽप्यमी बन्धुतयानुभूता', सहस्रशोऽस्मिन् भवता भवाब्धौ ।
जीवास्ततो बन्धव एव सर्वे, न कोऽपि ते शत्रुरिति प्रतीहि ॥ ५ ॥
सर्वे पितृभ्रातृपितृव्यमातृ पुत्राङ्गजास्त्रीभगिनीस्नुषात्वम् ।
जीवाः प्रपना बहुशस्तदेतत्कुटुम्बमेवेति परो न कश्चित् ॥ ६ ॥

(इन्द्रवज्रावृत्तद्वयम्)

एकेन्द्रियाद्या अपि हन्त जीवा', पञ्चेन्द्रियत्वाद्यधिगत्य सम्यक् ।
बोधिं समाराध्य कदा लभन्ते, भूयो भवभ्रान्तिभियां विरामम् ॥७॥
या रागरोषादिरुजो जनानाम्, शाम्यन्तु वाक्कायमनोद्रुहस्ताः ।
सर्वेऽप्युदासीनरस रसन्तु, सर्वत्र सर्वे सुखिनो भवन्तु ॥ ८ ॥

卐 अथ त्रयोदशभावनाष्टकम् । देशाखरागेण गीयते 卐

विनय विचिन्तय मित्रताम्, त्रिजगति जनतासु ।
कर्मविचित्रतया गतिम्, विविधा गमितासु, विन० ॥ १ ॥
सर्व ते प्रियबान्धवा, न हि रिपुरिह कोऽपि ।
मा कुरु कलिकलुषं मनो, निजसुकृतविलोपि, विन० ॥ २ ॥
यदि कोपं कुरुते परो, निजकर्मवशेन ।
अपि भवता किं भूयते, हृदि रोषवशेन, विन० ॥ ३ ॥
अनुचितमिह कलहं सताम्, त्यज समरसमीन ।
भज विवेककलहंसताम्, गुणपरिचयपीन, विन० ॥ ४ ॥
शत्रुजना सुखिनः समे, मत्सरमपहाय ।
सन्तु गन्तुमनसोऽप्यमी, शिवसौख्यगृहाय, विन० ॥ ५ ॥
सकृदपि यदि समतालवम्, हृदयेन लिहन्ति ।
विदितरसास्तत इह रतिम्, स्वत एव वहन्ति, विन० ॥ ६ ॥
किमुत कुमतमदमूर्छिता, दुरितेषु पतन्ति ।
जिनवचनानि कथं हहा, न रसादुपयन्ति, विन० ॥ ७ ॥
परमात्मनि विमलात्मनाम्, परिणम्य वसन्तु ।
विनय समामृतपानतो, जनता विलसन्तु, विन० ॥ ८ ॥

इति श्रीशान्तसुधारसगेयकाव्ये मैत्रीभावनाविभावनो नाम त्रयोदशः प्रकाशः

---

( स्रग्धरावृत्तचतुष्टयम् )

धन्यास्ते वीतरागाः क्षपकपथगतिक्षीणकर्मोपरागा-
स्त्रैलोक्ये गन्धनागाः सहजसमुदितज्ञानजाग्रद्विरागाः ।
अध्यारुह्यात्मशुद्ध्या सकलशशिकलानिर्मल(?) ध्यानधारा-
मारान्मुक्तेः प्रपन्नाः कृतसुकृतशतोपार्जितार्हन्त्यलक्ष्मीम् ॥ १ ॥
तेषां कर्मक्षयोत्थैरतनुगुणगणैर्निर्मलात्मस्वभावै-
र्गायं गायं पुनीमः स्तवनपरिणतैरष्ट वर्णास्पदानि ।
धन्या मन्ये रसज्ञा जगति भगवतस्तोत्रवाणीरसज्ञा
मज्ञां मन्ये तदन्यां वितथजनकथाकार्यमौखर्यमग्नाम् ॥ २ ॥

निर्ग्रन्थास्तेऽपि धन्या गिरिगहनगुहागह्वरान्तर्निविष्टा
धर्मध्यानावधानाः समरससुहिताः पक्षमासोपवासाः ।
येऽन्येऽपि ज्ञानवन्तः श्रुतविततधियो दत्तधर्मोपदेशाः
शान्ता दान्ता जिताक्षा जगति जिनपतेः शासन भासयन्ति ॥३॥
दान शील तपो ये विदधति गृहिणो भावना भावयन्ति
धर्म धन्याश्चतुर्धा श्रुतसमुपचितश्रद्धयाराधयन्ति ।
साध्व्यः श्राद्धाश्च धन्याः श्रुतविशदधिया शीलमुद्भावयन्त्य-
स्तान्सर्वान्मुक्तगर्वाः प्रतिदिनमसकृद्भाग्यभाजः स्तुवन्ति ॥ ४ ॥

(उपजातिवृत्तम्)

मिथ्यादृशामप्युपकारसारम्, सतोषसत्यादिगुणप्रसारम् ।
वदान्यता वैनयिकप्रकारम्, मार्गानुसारीत्यनुमोदयामः ॥ ५ ॥

(स्रग्धरावृत्तम्)

जिह्वे प्रह्वीभव त्व सुकृतिसुचरितोच्चारणे सुप्रसन्ना
भूयास्तामन्यकीर्तिश्रुतिरसिकतया मेऽद्य कर्णौ सुकर्णौ ।
वीक्ष्यान्यप्रौढलक्ष्मीं द्रुतमुपचिनुत लोचने रोचनत्व
ससारेऽस्मिन्नसारे फलमिति भवता जन्मनो मुख्यमेव ॥ ६ ॥

(उपजातिवृत्तम्)

प्रमोदमासाद्य गुणैः परेषा येषां मतिर्मज्जति साम्यसिन्धौ ।
देदीप्यते तेषु मनःप्रसादो गुणास्तथैते विशदीभवन्ति ॥ ७ ॥

卐 अथ चतुर्दशभावनाष्टकम् । टोडीरागेण गीयते 卐

विनय विभावय गुणपरितोषम्, विनय विभावय गुणपरितोषम् ।
परिहर दूर मत्सरदोषम्, विन० निजसुकृताप्तवरेषु परेषु, विन० ॥ १ ॥
दिष्ट्याय वितरति बहुदानम्, वरमयमिह लभते बहुमानम् ।
किमिति न विमृशसि परपरभागम्, यद्विभजसि तत्सुकृतविभागम्, विन० २
येषां मन इह विगतविकारम्, ये विदधति भुवि जगदुपकारम् ।
तेषां वयमुचिताचरितानाम्, नाम जपामो वारंवारम्, विन० ॥ ३ ॥

अहह तितिक्षागुणमसमानम्, पश्यत भगवति मुक्तिनिदानम् ।
येन रुषा सह लसदभिमानम्, झटिति विघटते कर्मवितानम्, विन० ४
अदधुर्येचन शीलमुदारम्, गृहिणोऽपि परिहृतपरदारम् ।
यश इह सम्प्रत्यपि शुचि तेषाम्, विलसति फलिताफलसहकारम्, विन० ५
या वनिता अपि यशसा साकम्, कुलयुगल विदधति सुपताकम् ।
तासां सुचरितसञ्चितराकम्, दर्शनमपि कृतसुकृतविपाकम्, विन० ॥ ६ ॥
तात्त्विकसात्त्विकसुजनवतंसा, केचन युक्तिविवेचनहंसा ।
अलमकृषत निज भुवनाभोगम्, स्मरणममीषां कृतशुभयोगम्, विन० ७
इति परगुणपरिभावनसारम्, सफलय सतत निजमवतारम् ।
कुरु सुविहितगुणनिधिगुणगानम्, विरचय शान्तसुधारसपानम्, विन० ८

इति श्रीशान्तसुधारसगेयकाव्ये प्रमोदभावनाविभावनो नाम चतुर्दशः प्रकाशः

---

( मालिनीवृत्तम् )

प्रथममशनपानप्राप्तिवाञ्छाविहस्ता-
स्तदनु वसनवेश्मालङ्कृतिव्यग्रचित्ताः ।
परिणयनमपत्यावाप्तिमिष्टेन्द्रियार्थान्
सततमभिलषन्तः स्वस्थतां क्वाश्नुवीरन् ॥ १ ॥

( शिखरिणीवृत्तम् )

उपायानां लक्षैः कथमपि समासाद्य विभवं
भवाभ्यासात्तत्र ध्रुवमिति निबध्नाति हृदयम् ।
अथाकस्मादस्मिन् विकिरति रजः क्रूरहृदयो
रिपुर्वा रोगो वा भयमुत जरा मृत्युरथवा ॥ २ ॥

( स्रग्धरावृत्तम् )

स्पर्धन्ते केऽपि केचिद्दधति हृदि मिथो मत्सरं क्रोधदग्धा
युध्यन्ते केऽप्यरुद्धा धनयुवतिपशुक्षेत्रपद्रादिहेतोः ।
केचिल्लोभाल्लभन्ते विपदमनुपदं दूरदेशानटन्तः
किं कुर्मः किं वदामो भृशमरतिशतैर्व्याकुलं विश्वमेतत् ॥३॥

(उपजातिवृत्तत्रयम्)

स्वय खनन्तः स्वकरेण गर्तान्, मध्ये स्वयं तत्र तथा पतन्ति ।
यथा ततो निष्क्रमणं तु दूरेऽधोऽधःप्रपाताद्विरमन्ति नैव ॥४॥
प्रकल्पयन्नास्तिकतादिवाद-मेवं प्रमाद परिशीलयन्तः ।
मग्ना निगोदादिषु दोषदग्धाः, दुरन्तदुःखानि हहा सहन्ते ॥५॥
शृण्वन्ति ये नैव हितोपदेशम्, न धर्मलेश मनसा स्पृशन्ति ।
रुजः कथङ्कारमथापनेयास्तेषामुपायस्त्वयमेक एव ॥ ६ ॥

(अनुष्टुब्वृत्तम्)

परदुःखप्रतीकारमेव ध्यायन्ति ये हृदि ।
लभन्ते निर्विकार ते सुखमायतिसुन्दरम् ॥ ७ ॥

卐 अथ पञ्चदशभावनाष्टकम् । रामकुलीरागेण गीयते 卐

सुजना भजत मुदा भगवन्तम्, सुजना भजत मुदा भगवन्तम् ।
शरणागतजनमिह निष्कारण करुणावन्तमवन्त रे, सुज० ॥ १ ॥
क्षणमुपधाय मनः स्थिरतायाम्, पिबत जिनागमसारम् ।
कापथघटनाविकृतविचारम्, त्यजत कृतान्तमसार रे, सुज० ॥ २ ॥
परिहरणीयो गुरुरविवेकी, भ्रमयति यो मतिमन्दम् ।
सुगुरुवचः सकृदपि परिपीतम्, प्रथयति परमानन्द रे, सुज० ॥३॥
कुमततमोभरमीलितनयनम्, किमु पृच्छत पन्थानम् ।
दधिबुद्ध्या नर जलमन्थन्याम्, किमु निदधत मन्थान रे, सुज०॥४॥
अनिरुद्धं मन एव जनानाम्, जनयति विविधातङ्कम् ।
सपदि सुखानि तदेव विधत्ते, आत्मारामसशङ्क रे, सुज० ॥ ५ ॥
परिहरताश्रवविकथागौरव मदनमनादिवयस्यम् ।
क्रियता सावरसाम्पदीनम्, ध्रुवमिदमेव रहस्य रे, सुज० ॥ ६ ॥
सह्यत इह किं भवकान्तारे, गदनिकुरम्बमपारम् ।
अनुसरताऽऽहितजगदुपकारम्, जिनपतिमगदङ्कार रे, सुज० ॥ ७ ॥
शृणुतैक विनयोदितवचनम्, नियतायतिहितरचनम् ।
रचयत सुकृतसुखशतसन्धानम्, शान्तसुधारसपान रे, सुज० ॥ ८ ॥

इति श्रीशान्तसुधारसगेयकाव्ये कारुण्यभावनाविभावनो नाम पञ्चदशः प्रकाशः

———>०<———

( पद्यापि शालिनीवृत्तानि )

श्रान्ता यस्मिन् विश्रम संश्रयन्ते, रुग्णाः प्रीतिं यत्समासाद्य सद्यः ।
लभ्यं रागद्वेषविद्वेषिरोधा दौदासीन्यं सर्वदा तत्प्रिय नः ॥ १ ॥
लोके लोका भिन्नभिन्नस्वरूपाः, भिन्नैर्भिन्नैः कर्मभिर्मर्मभिद्भिः ।
रम्यारम्यैश्चेष्टितैः कस्य कस्य, तद्विद्वद्भिः स्तूयते रुष्यते वा ॥ २ ॥
मिथ्या शंसन्वीरतीर्थेश्वरेण, रोद्धुं शेके न स्वशिष्यो जमालिः ।
अन्यः को वा रोत्स्यते केन पापात्तस्मादौदासीन्यमेवात्मनीनम् ॥३
अर्हन्तोऽपि प्राज्यशक्तिस्पृशः किम्, धर्मोद्योगं कारयेयुः प्रसह्य ।
दद्युः शुद्धं किन्तु धर्मोपदेशम्, यत्कुर्वाणा दुस्तरं निस्तरन्ति ॥ ४ ॥
तस्मादौदासीन्यपीयूषसारम्, वारं वारं हन्त सन्तो लिहन्तु ।
आनन्दानामुत्तरङ्गत्तरङ्गैर्जीवद्भिर्यद्भुज्यते मुक्तिसौख्यम् ॥ ५ ॥

卐 षोडशभावनाष्टकम् । प्रभातिरागेण गीयते 卐

अनुभव विनय सदा सुखमनुभव, औदासीन्यमुदार रे ।
कुशलसमागममागमसारम्, कामितफलमन्दार रे, अनु० ॥ १ ॥
परिहर परचिन्तापरिवारम्, चिन्तय निजमविकार रे ।
तव किं कोऽपि चिनोति करीरम्, चिनुतेऽन्य सहकार रे, अनु० ॥२॥
योऽपि न सहते हितमुपदेशम्, तदुपरि मा कुरु कोप रे ।
निष्फलया किं परजनतप्त्या, कुरुषे निजसुखलोप रे, अनु० ॥ ३ ॥
सूत्रमपास्य जडा भाषन्ते, केचन मतमुत्सूत्र रे ।
किं कुर्मस्ते परिहृतपयसो, यदि पीयन्ते (पिबन्ति) मूत्र रे, अनु० ॥४॥
पश्यसि किं न मनःपरिणामम्, निजनिजगत्यनुसार रे ।
येन जनेन यथा भवितव्यम्, तद्भवता दुर्वार रे, अनु० ॥ ५ ॥
रमय हृदा हृदयङ्गमसमताम्, संवृणु मायाजाल रे ।
वृथा वहसि पुद्गलपरवशतामायुःपरिमितकाल रे, अनु० ॥ ६ ॥
अनुपमतीर्थमिदं स्मर चेतनमन्तः स्थितमभिराम रे ।
विरतिभावविशदपरिणामम्, लभसे सुखमविराम रे, अनु० ॥ ७ ॥

परमब्रह्मपरिणामनिदानम्, स्फुटकेवलविज्ञान रे ।
विरचय विनयविवेचितज्ञा(गा?)नम्, शा तसुधारसपान रे, अनु० ॥८॥

इति श्रीशा तसुधारसगेयकाव्ये माध्यस्थ्यभावनाविभावनो नाम षोडश प्रकाश

(स्रग्धरावृत्तद्वयम्)

एवं सद्भावनाभिः सुरभितहृदयाः संशयातीतगीतो-
च्चीतस्फीतात्मतत्त्वास्त्वरितमपसरन्मोहनिद्राममत्वाः ।
गत्वा सत्त्वाममत्वातिशयमनुपमा चक्रिशक्राधिकानां
सौख्यानां मङ्क्षु लक्ष्मीम्, परिचितविनयाः स्फारकीर्तिं श्रयन्ते १

दुर्ध्यानप्रेतपीडा प्रभवति न मनाक्काचिदद्वन्द्वसौख्य-
स्फातिः प्रीणाति चित्तं प्रसरति परितः सौख्य(म्यी?)सौहित्यसिन्धुः ।
क्षीयन्ते रागरोषप्रभृतिरिपुभटाः, सिद्धिसाम्राज्यलक्ष्मीः
स्याद्वश्या यन्महिम्ना विनयशुचिधियो भावनास्ताः श्रयध्वम् ॥ २ ॥

(पथ्यावृत्तम्)

श्रीहीरविजयसूरीश्वरशिष्यौ सोदरावभूतां द्वौ ।
श्रीसोमविजयवाचक वाचकनरकीर्तिविजयाख्यौ ॥ ३ ॥

(गीतिद्वयम्)

तत्र च कीर्तिविजयवाचकशिष्योपाध्यायविनयविजयेन ।
शान्तसुधारसनामा संदृब्धो भावनाप्रबन्धो(ओधो?)ऽयम् ॥ ४ ॥
शिखिनयनसिन्धुशशिमितवर्षे हर्षेण गन्धपुरनगरे ।
श्रीविजयप्रभसूरिप्रसादतो यत्न एष सफलोऽभूत् ॥ ५ ॥

(उपजातिवृत्तम्)

यथा विधुः षोडशभिः कलाभिः सम्पूर्णतामेत्य जगत्पुनीते ।
ग्रन्थस्तथा षोडशभिः प्रकाशैरयं समग्रैः शिवमातनोतु ॥ ६ ॥

(इन्द्रवज्रावृत्तम्)

यावज्जगत्येष सहस्रभानुः पीयूषभानुश्च सदोदयेते ।
तावत्सतामेतदपि प्रमोदम्, ज्योतिः स्फुरद्वाङ्मयमातनोतु ॥७॥

इति समाप्तोऽयं गेयकाव्यमयः श्रीशान्तसुधारसः

## श्रीप्रमाणनयतत्त्वरहस्यम् ।

स्वपरव्यवसायि ज्ञानं प्रमाणम् । हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणमतो ज्ञानमेवेदम् । तद्व्यवसायस्वभावं समारोपविरुद्धत्वादनुमाणवत् । अतस्मिन् तदध्यवसायः समारोपः । स संशयविपर्ययानध्यवसायभेदात्रेधा । स्वोन्मुखतया प्रतिभासनं स्वस्य व्यवसायोऽर्थस्येव तदुन्मुखतया घटमहमात्मना वेद्मीति । कर्मवत् कर्तृकरणक्रियाप्रतीतेः । को वा तत्प्रतिभासितमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् प्रदीपवत् । तत्प्रामाण्यं स्वतः परतश्च ॥१॥

तत् द्वेधा प्रत्यक्षं च परोक्षं च । स्पष्टं प्रत्यक्षम् । तद्द्विविधं सांव्यवहारिकं पारमार्थिकं च । आद्यमिन्द्रियानिन्द्रियनिमित्तम् । पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षमवध्यादि ॥ २ ॥

अस्पष्टं परोक्षम् । स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदम् । संस्कारोद्बोधनिबन्धनं तदित्याकारं स्मरणम् स देवदत्तो यथा । दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानम्—तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि—यथा स एवायं देवदत्तः, गोसदृशो गवयः, गोविलक्षणो महिषः, इदमस्माद्दूरम्, वृक्षोऽयमित्यादि । उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनं तर्कः —यथाग्नौ सत्येव धूमो भवति, तदभावे न भवत्येवेति । अनुमानं द्विधा-स्वार्थं परार्थं च । हेतुग्रहणसम्बन्धस्मरणहेतुकं साध्यविज्ञानं स्वार्थम् । निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः । इष्टमबाधितमसिद्धं साध्यम् । तद्विशिष्टः प्रसिद्धो धर्मी पक्षः । धर्मिणः प्रसिद्धिर्विकल्पप्रमाणोभयैः । विकल्पसिद्धे धर्मिणि सत्तेतरे साध्ये—अस्ति सर्वज्ञो नास्ति खरविषाणम् । प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता—अग्निमानयं देशः, परिणामी शब्दो यथा । पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् । व्युत्पन्नं प्रति हेतुप्रयोगास्तथोपपत्त्यान्यथानुपपत्त्यैव । मन्दमतीस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि । दृष्टान्तो द्वेधा अन्वयव्यतिरेकभेदात् । साधनसत्तायां यत्रावश्यं साध्यसत्ता प्रदर्श्यते सोऽन्वयदृष्टान्तः । साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः । हेतोरुपसंहार उपनयः । प्रतिज्ञायास्तु निगमनम् । एते पञ्चावयवाः कीर्त्यन्ते । स हेतुर्द्विधा—उपलब्ध्यनुपलब्धिभेदात् । उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च । अविरुद्धोपलब्धिर्विधौ षोढा—व्याप्यकार्यकारणपूर्वोत्तरसहचर-

भेदात्। परिणामी शब्दः कृतकत्वात्, य कृतक स परिणामी दृष्टो यथा घट, कृतकश्चाय तस्मात्परिणामी, यस्तु न परिणामी स न कृतको दृष्टो यथा वन्ध्यास्तनन्धय, कृतकश्चायम्, तस्मात्परिणामी। अस्त्यत्र देहिनि बुद्धिर्व्यवहारादे। अस्त्यत्र छाया छत्रात्। उदेष्यति शकट कृत्तिकोदयात्। उद्गाद्भरणि प्राक्तत एव। अस्त्यत्र मातुलिङ्गे रूप रसात्॥ विरुद्धतदुपलब्धि प्रतिषेधे तथा ६—नास्त्यत्र शीतस्पर्श औष्ण्यात्। नास्त्यत्र शीतस्पर्शो धूमात्। नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात्। नोदेष्यति मुहूर्तान्ते शकट रेवत्युदयात्। नोद्गाद्भरणिर्मुहूर्तात् पूर्वं पुष्योदयात्। नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनात्॥ अविरुद्धानुपलब्धि प्रतिषेधे सप्तधा-स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलब्धिभेदात्। नास्त्यत्र भूतले घट उपलब्धिलक्षणप्राप्तत्वे सत्यनुपलब्धे। नास्त्यत्र शिंशपा वृक्षानुपलब्धे। नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धे। नास्त्यत्र धूमोऽनग्ने। नोदेष्यति मुहूर्तान्ते शकट कृत्तिकोदयानुपलब्धे। नोद्गाद्भरणिर्मुहूर्तात्प्राक् तत एव। नास्त्यत्र समतुलायामुन्नामोऽवनामानुपलब्धे॥ विरुद्धकार्यकारणस्वभावानुपलब्धिविधौ सम्भवति। यथास्मिन् प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धे। अस्त्यत्र देहिनि दु खमिष्टसयोगाभावात्। अनेकान्तात्मक वस्तु एकान्तस्वरूपानुपलब्धे। परम्परया सम्भवत्साधनमत्रैवान्तर्भावनीयम्—अभूदत्र चक्रे शिवक स्थासात्, कार्यकार्यमविरुद्धकार्योपलब्धौ यथा नास्त्यत्र गुहायां मृगक्रीडन मृगारिशब्दनात्। कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथा॥ ३॥

आप्तवचनाज्जातमर्थज्ञानमागम। उपचारादाप्तवचन च। यथास्त्यत्र निधि, सन्ति मेर्वादय पदार्था अभिधेय वस्तु यथावस्थित यो जानीते यथाज्ञात चाभिधत्ते स आप्त, जनकतीर्थकरादि। सहजसामर्थ्यसङ्केताभ्यामर्थबोधनिबन्धन शब्द॥ ४॥

सामान्यविशेषाद्यर्थस्तस्य विषय। अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्, पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च। सामान्य द्विधा तिर्यगूर्ध्वताभेदात्। सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत्। परापरविवर्तव्यापि द्रव्यमूर्ध्वता। मृदिव स्थासादिषु॥ विशेषश्च पर्यायव्यतिरेकभेदात्। एकस्मिन् द्रव्ये क्रमभाविन (परिणामा) पर्याया —आत्मनि हर्षविषादादिवत्।(अर्थान्तरगतो)विसदृशपरिणामो व्यतिरेको गोमहिषादिवत् ५

अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् । प्रमाद्भिन्नमभिन्न च । य प्रमिमीते स एव निवृत्ताज्ञानो जहात्याददात्युपेक्षते चेति प्रतीति । प्रमाणस्वरूपादेरन्यत् तदाभासम् सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनसंशयाद्या प्रमाणाभासा । द्विचन्द्रादिज्ञान विभङ्गश्च प्रत्यक्षाभासम् । अतस्मिंस्तदिति स्मरणाभास यज्ञदत्ते स देवदत्तो यथा । सदृशे तदेवेद तत्सदृशमित्यादिज्ञान प्रत्यभिज्ञानाभास यमलज्ञानवत् । असम्बद्धे तज्ज्ञान तर्काभास यावांस्तत्पुत्र स श्याम इति यथा ॥ अनुमानाभासमिदम्–(तत्र) अनिष्टादि पक्षाभास अनिष्टो मीमांसकस्यानित्य शब्द , सिद्ध श्रावण शब्द , बाधित प्रत्यक्षानुमानागमलोकस्ववचनैरनुष्णोऽग्निरित्यादिवत् । असिद्धविरुद्धानैकान्तिका हेत्वाभासा –प्रमाणेनासिद्धान्यथानुपपत्तिरसिद्धः, परिणामी शब्दश्चाक्षुषत्वात्, विपरीतान्यथानुपपत्तिर्विरुद्ध , अनित्य पुरुष प्रत्यभिज्ञानादिमत्वात्, विपक्षेप्यविरुद्धवृत्तिरनैकान्तिक , अनित्य शब्द प्रमेयत्वात् ॥ अन्वये दृष्टान्ताभासा असिद्धसाध्यसाधनोभया , अपौरुषेय शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत्, विपरीतान्वयश्च यदपौरुषेय तदमूर्त्त विद्युदादिनाऽतिप्रसङ्गात् । व्यतिरेकेऽसिद्धतद्व्यतिरेका , परमाण्विन्द्रियसुखाकाशवत् । विपरीतव्यतिरेकश्च यन्नामूर्त्त तन्नापौरुषमिति । अनाप्तवचनज ज्ञानमागमाभास नद्यास्तीरे मोदकराशय सन्ति धावध्व धावध्व माणवका । प्रत्यक्षमेव प्रमाणमित्यादि सङ्ख्याभासम्, विषयाभास सामान्य विशेषो द्वय वा स्वतन्त्रम् । फलाभास प्रमादभिन्न भिन्नमेव वा ॥६॥

मूलनयौ द्रव्यार्थिकपर्यायार्थिकौ । द्रव्यार्थिकस्त्रेधा, नैगमसङ्ग्रहव्यवहारभेदात् । पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रशब्दसमभिरूढैवम्भूतभेदात् । अन्योऽन्यगुणप्रधानभूतभेदाभेदप्रवणो नैगम । सन्मात्रग्राही सङ्ग्रह । सद्विशेषप्रकाशको व्यवहार । शुद्धपर्यायग्राही ऋजुसूत्र । कालकारकलिङ्गाना भेदाद्ध्वनेरर्थभेदवादी शब्द । पर्यायध्वनिभेदादर्थनानात्वनिरूपक समभिरूढ । क्रियाश्रयेण भेदप्ररूपणमेवम्भूत । त एवेतरनिरपेक्षास्तदाभासा । प्रमाता प्रत्यक्षादिप्रसिद्ध आत्मा । चैतन्यस्वरूप परिणामी कर्ता साक्षाद्भोक्ता स्वदेहपरिमाण प्रतिक्षेत्र भिन्नः पौद्गलिकाऽदृष्टवाश्चायम् । कृत्स्नकर्मक्षयस्वरूपाऽस्य सिद्धि ॥ ७ ॥

इति प्रमाणनयतत्त्वरहस्य स्याद्वादरत्नाकरप्रमेयरत्नमालासूत्रेऽनुसृत्य विहितमिद

श्रीगुणरत्नसुरिभि

## श्रीवर्धमानविद्यास्तवः

विलसत जोइनीए परमिट्ठीण सरेमि पच हृ । सुह पुट्टि तुट्टि सतिग आरुग्ग एग पए पयउ ॥ १ ॥ केवल सिरितिलयाण, अट्ठमहापाडिहेर-कलियाण । तिहुयणपणयाण नमो अरिहताण, सयाकालं ॥ २ ॥ सिद्धि-गइमुवगयाण, अप्पडिहयनाणदसणसिरीण । सासयरूवाण नमो सिद्धा-णणतसोक्खाण ॥ ३ ॥ जिणपहुपट्ठट्ठियाण, पचविहायारसारचरियाण । पवयणवसहाण नमो आयरियाण सुहनिहीण ॥ ४ ॥ सयय नमो उव-ज्झायाण, अणवरयसुयपयाणेण । अणुगहियमुणिगणाण, अक्खीणवरणाण-जल्हीण ॥ ५ ॥ निचपि नमो लोए सव्वसाहूणमणहवित्तीण । मुत्तिवहु-सगमुस्सुयमणसाणवि निरभिसगाण ॥ ६ ॥ तह ओहि परमोहि सव्वोहि अणतओसहीण च । सज्झोइपयाण नमो जिणाण सव्वेसिमेएसिं ॥ ७ ॥ तस्सय नमो भगवओ महइ महासिद्धिणो थुणइ विज्जा । वीरे य सेणवीरे जयति अपराजिए जस्स ॥ ८ ॥ जाणेसो पचनमुक्कारो निवसइ मणे महामतो । ताण न पिसायसाइणिभूयाइ भयाइ पहवति ॥ ९ ॥ सुमरियमित्तोवि इमो तिलोअरक्खा विनक्खमणमहणो । रणरायगपासाइसु विजयपडाय पयच्छेइ ॥ १० ॥ गुणिजो अ सव्वपावप्पणासणो तहय मङ्गलाण च । सव्वेसिं पढम, हवइ मङ्गल, सुमइसूरीहिं ॥ ११ ॥ इय वद्धमाणविज्जा चक्केसरपहु पसाय सपत्ता । पचपरमिट्ठिणो मह हवतु सुलहा पइभवमि ॥ १२ ॥ श्रीरस्तु । मङ्गल भूयात् ॥ 卐 卐 卐 卐 卐



# श्रीगौतमाष्टकम्

श्रीइन्द्रभूतिं वसुभूतिपुत्रं, पृथ्वीभवं गौतमगोत्ररत्नम् । स्तुवन्ति देवासुरमानवेन्द्राः, स गौतमो यच्छतु वाञ्छितं मे ॥ १ ॥ श्रीवर्धमानात् त्रिपदीमवाप्य, मुहूर्तमात्रेण कृतानि येन । अङ्गानि पूर्वाणि चतुर्दशाऽपि, स गौतमो यच्छतु वाञ्छितं मे ॥ २ ॥ श्रीवीरनाथेन पुरा प्रणीतम्, मन्त्रं महानन्दसुखाय यस्य । ध्यायन्त्यमी सूरिवराः समग्राः, स गौतमो यच्छतु वाञ्छितं मे ॥ ३ ॥ यस्याभिधानं मुनयोऽपि सर्वे, गृह्णन्ति भिक्षाभ्रमणस्य काले । मिष्टान्नपानाम्बरपूर्णकामाः, स गौतमो यच्छतु वाञ्छितं मे ॥ ४ ॥ अष्टापदाद्रौ गगने स्वशक्त्या, ययौ जिनानां पदवन्दनाय । निशम्य तीर्थातिशयं सुरेभ्यः, स गौतमो यच्छतु वाञ्छितं मे ॥ ५ ॥ त्रिपञ्चसङ्ख्याशततापसानाम्, तपः कृशानामपुनर्भवाय । अक्षीणलब्ध्या परमान्नदाता, स गौतमो यच्छतु वाञ्छितं मे ॥ ६ ॥ सदक्षिणं भोजनमेव देयं, साधर्मिकं सङ्घसपर्ययेति । कैवल्यवस्त्रं प्रददौ मुनीनाम्, स गौतमो यच्छतु वाञ्छितं मे ॥ ७ ॥ शिवं गते भर्तरि वीरनाथे, युगप्रधानत्वमिहैव मत्वा । पट्टाभिषेको विदधे सुरेन्द्रैः, स गौतमो यच्छतु वाञ्छितं मे ॥ ८ ॥ श्रीगौतमस्याष्टकमादरेण, प्रबोधकाले मुनिपुङ्गवा ये । पठन्ति ते सूरिपदं च देवानन्दं लभन्ते सुतरां क्रमेण ॥ ९ ॥



॥ हे० त्रि० पु० च० गता श्रीशतबलनृपस्य भावना ॥

विधाय सद्नाशौचमुपस्कारैर्नवनवम् । गोपनीयमिदं हन्त कियत्कालं कलेवरम् ॥ १ ॥ सत्कृतोऽनेकशोऽप्येष सत्क्रियेत यदापि न । तदापि विक्रियां याति कायः खलु खलोपमः ॥२॥ अहो नवभिर्निष्पतितैर्विष्ठामूत्रकफादिभिः । दूयन्ते प्राणिनोऽमी, कायस्यान्तः स्थितैर्न किम् ॥ ३ ॥ रोगाः समुद्भवन्त्यस्मिन्नत्यन्तातङ्कदायिनः । दन्दशूका इव क्रूरा जरद्विटपकोटरे ॥ ४ ॥ निसर्गाद्गत्वरश्चायं कायोऽभ्रं इव शारदः । दृष्टनष्टा च तत्रेयं यौवनश्रीस्तडिन्निभा ॥ ५ ॥ आयुः पताकाचपलम्, तरङ्गचपलाः श्रियः । भोगिभोगनिभा भोगाः, सङ्गमाः स्वप्नसन्निभाः ॥ ६ ॥ कामक्रोधादिभिस्तापैस्ताप्यमानो दिवाऽनिशम् । आत्मा शरीरान्तस्थोऽसौ पच्यते पुटपाकवत् ॥ ७ ॥ विषयेष्वतिदुःखेषु सुखमानी मनागपि । नाहो विरज्यते जनोऽशुचिकीट इवाशुचौ ॥ ८ ॥ दुरन्तविषयास्वादपराधीनमना जनः । अन्धोऽन्धुमिव

यत्परैर्योगिभिर्गीत तदित्थ युज्यतेऽखिलम् ॥ ४१ ॥ ज्ञाने चैव क्रियाया च युगपद्विहितादर । द्रव्यभावविशुद्ध सन् प्रयात्येव पर पदम् ॥४२॥ *क्रियाज्ञानसयोगविश्रान्तचित्ता* समुद्भूतनिर्बाधचारित्रवृत्ता । नयोन्मेषनिर्णीतनिःशेषभावास्तप शक्तिलब्धप्रसिद्धप्रभावा ॥ ४३ ॥ भयक्रोधमायामदाज्ञाननिद्राप्रमादोज्झिता शुद्धमुद्रा मुनीन्द्रा । यश श्रीसमालिङ्गिता वादिदन्तिस्मयोच्छेदहर्यक्षतुल्या जयन्ति ॥ ४४ ॥ ॥ ॥

इति पण्डितश्रीनयविजयगणिशिष्यपण्डितश्रीपद्मविजयगणिसहोदरोपाध्यायश्रीयशोविजयगणिविरचितेऽध्यात्मोपनिषत्प्रकरणे क्रियायोगशुद्धिनामा तृतीयोऽधिकार समाप्त ॥३॥

---

॥ ज्ञानक्रियाश्वद्वययुक्तसाम्य-रथाधिरूढः शिवमार्गगामी । न ग्रामपूःकण्टकजारतीना जनोऽनुपानत्क इवार्तिमेति ॥ १ ॥ आत्मप्रवृत्तावतिजागरूक परप्रवृत्तौ बधिरान्धमूक । सदा चिदानन्दपदोपयोगी लोकोत्तरं साम्यमुपैति योगी ॥ २ ॥ परीषहैश्च प्रबलोपसर्गयोगाच्चलत्येव न साम्ययुक्त । स्थैर्याद्विपर्यासमुपैति जातु क्ष्मा न शैलैर्न च सिन्धुनाथै ॥ ३ ॥ इतस्ततो नारतिवह्नियोगादुड्डीय गच्छेद्यदि चित्तसूत । साम्यैकसिद्धौषधमूर्च्छित सन् कल्याणसिद्धेर्न तदा विलम्ब ॥४॥ अन्तर्निमग्न समतासुखाब्धौ बाह्ये सुखे नो रतिमेति योगी । अटत्यटव्या क इवार्थलुब्धो गृहे समुत्सर्पति कल्पवृक्षे ॥ ५ ॥ यस्मिन्नविद्यार्पितबाह्यवस्तुविस्तारजभ्रान्तिरुपैति शान्तिम् । तस्मिंश्चिदेकार्णवनिस्तरङ्गस्वभावसाम्ये रमते सुबुद्धि ॥६॥ शुद्धात्मतत्त्वप्रगुणा विमर्शा स्पर्शाख्यसवेदनमादधाना । यदान्यबुद्धिं विनिवर्तयन्ति तदा समत्व प्रथतेऽवशिष्टम् ॥ ७ ॥ विना समत्व प्रसरन्ममत्व सामायिक मायिकमेव मन्ये । आये समाना सति सद्गुणाना शुद्ध हि तच्छुद्धनया विदन्ति ॥८॥ निशानभोमन्दिररत्नदीप्रज्योतिर्भिरुद्योतितपूर्वमन्त । विद्योतते तत्परमात्मतत्त्व प्रसृत्वरे साम्यमणिप्रकाशे ॥ ९ ॥ एका विवेकाङ्कुरिता श्रिता या निर्वाणमापुर्भरतादिभूपा । सैवर्जुमार्ग समता मुनीनामन्यस्तु तस्या निखिल प्रपञ्च ॥ १० ॥ अल्पेऽपि साधुर्न कषायवह्नावह्नाय विश्वासमुपैति भीत । प्रवर्धमान स दहेद्गुणौघ साम्याम्बुपूरैर्यदि नापनीत ॥ ११ ॥ प्रारब्धजा ज्ञानवता कषाया आभासिका इत्यभिमानमात्रम् । नाशो हि भाव प्रतिसङ्ख्यया यो नाबोधवत्साम्यरतौ स तिष्ठेत् ॥ १२ ॥ साम्य विना यस्य तपःक्रियादेर्निष्ठा प्रतिष्ठार्जनमात्र

त्व ॥ स्वर्धेनुचिन्तामणिकामकुम्भान् करोत्यसौ काणकपर्दमूल्यान् ॥ १३ ॥ ज्ञानी क्रियावान् विरतस्तपस्वी ध्यानी च मौनी स्थिरदर्शनश्च । साधुर्गुणं लभते न जातु, प्राप्नोति यः साम्यसमाधिनिष्ठ ॥ १४ ॥ दुर्योधनेनाभिहतश्चुकोप न पाण्डवैर्यो न नुतो जहर्ष । स्तुमो भदन्तं दमदन्तमन्तःसमत्ववन्तं मुनिसत्तमं तम् ॥ १५ ॥ यो दह्यमानां मिथिलां निरीक्ष्य शक्रेण नुन्नोऽपि नमिः पुरीं स्वाम् । न मेऽत्र किञ्चिज्ज्वलतीति मेने साम्येन तेनोरुयशो वितेने ॥ १६ ॥ साम्यप्रसादाऽन्वपुर्ममत्वा सत्त्वाधिकास्व ध्रुवमेव मत्वा । न सेहिरेऽत्ति किमु तीव्रयन्त्रनिष्पीडिता स्कन्धकसूरिशिष्या ॥ १७ ॥ लोकोत्तरं चारुचरित्रमेतन्मेतार्यसाधोः समतासमाधेः । हृदाप्यकुप्यन्न यदार्द्रचर्मबद्धेऽपि मूर्धन्ययमाप तापम् ॥ १८ ॥ जज्वाल नान्तश्च सुराधमेन प्रोज्ज्वालितेऽपि ज्वलनेन मौलौ । मौलिर्मुनीनां स न कैर्निषेव्यः कृष्णानुजन्मा समताऽमृताब्धिः ॥ १९ ॥ गङ्गाजले यो न जहौ सुरेण विद्धोऽपि शूले समतानुवेधम् । प्रयागतीर्थोन्यधृत्मुनीनां मान्यः स सूरिस्तनुजोऽन्निकायाः ॥ २० ॥ स्त्रीभ्रूणगोब्राह्मणघातजातपापान्धपातकृताभिमुख्याः । दृढप्रहारिप्रमुखाः क्षणेन साम्यावलम्बात्पदमुच्चमापुः ॥ २१ ॥ अप्राप्तधर्माऽपि पुराऽऽदिमार्हन्माता शिवं यद्भगवत्यवाप । नाप्नोति पारं वचसोऽनुपाधिस्समाधिसाम्यस्य विजृम्भितं तत् ॥ २२ ॥

इति शुभमतिर्मत्वा साम्यप्रभावमनुत्तरं य इह निरतो नित्यानन्दः कदापि न खिद्यते । विगलदखिलाविद्यः पूर्णस्वभावसमृद्धिमान्, स खलु लभते भावारीणां जयेन यशःश्रियम् ॥ २३ ॥ फ ॥ फ ॥ फ ॥

इति पण्डितश्रीनयविजयगणिशिष्यपण्डितश्रीपद्मविजयगणिसहोदरोपाध्यायश्रीयशोविजयगणिविरचितेऽध्यात्मोपनिषत्प्रकरणे साम्ययोगशुद्धिनामा चतुर्थोऽधिकारः समाप्तः ॥४॥

॥ समाप्तमिदं यशःश्रीयद्दमध्यात्मोपनिषत्प्रकरणम् ॥

---

## ॥ श्रीमन्त्राधिराजगर्भितश्रीगौतमस्वामिस्तवनम् ॥

नमोऽस्तु श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्मीविलासैकनिकेतनाय । श्रीवीरपट्टाम्बरभास्कराय लोकोत्तमाय प्रभुगौतमाय ॥ १ ॥ ॐकारमक्षीणमहानसानां श्रीमन्तमुज्जृम्भतपःप्रभावैः । ह्रींमन्तमात्मानुगवन्दनेनाऽर्हन्तं नमस्यामि तमिन्द्रभूतिम् ॥ २ ॥ नभिन्नसौवर्णसहस्रपत्रगर्भस्थ-सिंहासनसंनिषण्णम् । दिव्यातपत्रं परिवीज्यमानं सचामरैश्चाऽमरराजसेव्यम् ॥ ३ ॥

कल्पद्रुचिन्तामणिकामधेनुमसमाननामानममानशक्तिम् । अनेकलोकोत्तरलब्धिसिद्धं श्रीगौतमं धन्यतमाः स्मरन्ति ॥ ४ ॥ एकैव षड्दर्शनदर्शनीका पुराणवेदागमजन्मभूमिका । आनन्दचिद्ब्रह्ममयी सरस्वती सदेन्द्रभूतेश्वरणोपसेविनी ॥ ५ ॥ सदा चतुष्षष्टिसुरेन्द्रमानसव्यामोहिनी पद्महृगाधिवासिनी । सर्वाङ्गशृङ्गारतरङ्गितद्युति श्रीगौतमं श्रीरपि वन्दते त्रिधा ॥ ६ ॥ जयानयन्तीविजयापराजितानन्दासुभद्राप्रमुखाः सुरीजनाः । प्रतिक्षणोज्जागरभूरिविभ्रमं श्रीगौतमं गायति गाढगौरवं ॥७॥ मानुषोत्तरगिरेः शिरःस्थिता, दोःसहस्रसुभगा महाप्रभा । गीतगौतमगुणा त्रिविष्टपस्वामिनी शिवशतं दधातु मे ॥ ८ ॥ यक्षषोडशसहस्रनायको दिव्यविंशतिभुजो महानलः । द्वादशाङ्गसमयाधिदेवता गौतमस्मृतिजुषा शिवङ्करः ॥९॥ ईशाननाथेन समं शतक्रतुः सनत्कुमाराधिपतिः सुरान्वितः । श्रीब्रह्मलोकाधिपतिश्च सेवते सगौतमं मन्त्रवरं पदे पदे ॥१०॥ अष्टनागकुलनायको मणिप्रोल्लसत्फणसहस्रभासुरः । गौतमाय धरणः कृताञ्जलिर्मन्त्रराजसहिताय वन्दते ॥ ११ ॥ रोहिणीप्रभृतयः सुराङ्गना वासवा अपि परे सदाश्रवाः । गौतमं मनसि यक्षयक्षिणीश्रेणयोऽपि दधती मुनीश्वरम् ॥ १२ ॥ सज्जलान्नधनभोगधृतीनां लब्धिरद्भुततमेह भवे स्यात् । गौतमस्मरणतः परलोके भूर्भुवः स्वरपवर्गसुखानि ॥१३॥ ॐ क्रौं श्रीं ह्रीं मन्त्रतो ध्यानकाले पार्श्वे कृत्वा प्राञ्जलिः सर्वदेवान् । कायोत्सर्गैधूपकर्पूरवासैः पूजां कुर्यात् सर्वदा ब्रह्मचारी ॥ १४ ॥ जितेन्द्रियः स्वल्पजलाभिषेकवान् शुद्धाम्बरो गुप्तिसमित्यलङ्कृतः । श्रीइन्द्रभूतेस्त्पवैणवं गुणान् स्मरन्नरः स्यात् कृतसिन्धुपारगः ॥१५॥ तं श्रयन्ति पुरुषार्थसिद्धयो भूष्यते विशदसाहसेन सः । गौतमः प्रणयिभुक्तिमुक्तिदो यस्य भावविभवस्य नाथते ॥ १६ ॥

---

## वाचकेन्द्रोमास्वातिविरचितं श्रीप्रशमरतिप्रकरणम् ।

नाभेयाद्याः सिद्धार्थराजसूनुचरमाश्चरमदेहाः । पञ्च नव दश च, दशविधधर्मविधिविदो जयन्ति जिनाः ॥ १ ॥ जिनसिद्धाचार्योपाध्यायान् प्रणिपत्य सर्वसाधूँश्च । प्रशमरतिस्थैर्यार्थं वक्ष्ये जिनशासनात्किञ्चित् ॥ २ ॥ यद्यप्यनन्तगमपर्ययार्थहेतुनयशब्दरत्नाढ्यम् । सर्वज्ञशासनपुरं प्रवेष्टुमबहुश्रुतैर्दुःखम् ॥ ३ ॥ श्रुतबुद्धिविभवपरिहीणकस्तथाप्यहमशक्तिमविचिन्त्य । द्रमक इवावयवोञ्छकमन्वेष्टुं तत्प्रवेशेप्सुः ॥ ४ ॥ बहुभिर्जिनवचनार्णव-

पारगतै कविवृषैर्महामतिभि । पूर्वमनेका ग्रथिता प्रशमजननशास्त्रपद्धतय ॥ ५ ॥ ताभ्यो विसृता श्रुतवाक्पुलाकिका प्रवचनाश्रिता काश्चित् । पारम्पर्यादुच्छेषिका कृपणकेन सहृत्य ॥ ६ ॥ तद्भक्तिबलार्पितया मयाप्यविमलाल्पया स्वमतिशक्त्या । प्रशमेष्टतयानुसृता विरागमार्गैकपदिकेयम् ॥ ७ ॥ यद्यप्यवगीतार्था न वा कठोरप्रकृष्टभावार्था । सद्भिस्तथापि मय्यनुकम्पैकरसैरनुग्राह्यम् ॥ ८ ॥ कोऽत्र निमित्त वक्ष्यति निसर्गमतिसुनिपुणोऽपि वा ह्यन्यत् । दोषमलिनेऽपि सन्तो यद्गुणसारग्रहणदक्षा ॥ ९ ॥ सद्भि सुपरिगृहीत यत्किञ्चिदपि प्रकाशता याति । मलिनोऽपि यथा हरिण प्रकाशते पूर्णचन्द्रस्थ ॥ १० ॥ बालस्य यथा वचन काहलमपि शोभते पितृसकाशे । तद्वत्सज्जनमध्ये प्रलपितमपि सिद्धिमुपयाति ॥११॥ ये तीर्थकृत्प्रणीता भावास्तदनन्तरैश्च परिकथिता । तेषा बहुशोऽप्यनुकीर्तन भवति पुष्टिकरमेव ॥ १२ ॥ यद्वद्विषघातार्थं मन्त्रपद न पुनरुक्तदोषोऽस्ति । तद्वद्रागविषघ्न पुनरुक्तमदुष्टमर्थपदम् १३ यद्वदुपयुक्तपूर्वमपि भैषज सेव्यतेऽर्त्तिनाशाय । तद्वद्रागार्तिहर बहुशोऽप्यनुयोज्यमर्थपदम् ॥ १४ ॥ वृत्त्यर्थं कर्म यथा तदेव लोक पुन पुन कुरुते । एव विरागवार्ताहेतुरपि पुन पुनश्चिन्त्य ॥ १५ ॥ दृढतामुपैति वैराग्यभावना येन येन भावेन । तस्मिंस्तस्मिन् कार्य कायमनोवाग्भिरभ्यास ॥ १६ ॥ माध्यस्थ्य वैराग्य विरागता शान्तिरुपशम प्रशम । दोषक्षय कषायविजयश्च वैराग्यपर्याया ॥ १७ ॥ इच्छा मूर्च्छा काम स्नेहो गार्ध्यं ममत्वमभिनन्द । अभिलाष इत्यनेकानि रागपर्यायवचनानि ॥ १८ ॥ ईर्ष्या रोषो दोषो द्वेष परिवादमत्सरासूया । वैरप्रचण्डनाद्या नैके द्वेषस्य पर्याया ॥ १९ ॥ *रागद्वेषपरिगतो मिथ्यात्वोपहतकलुषया दृष्ट्या । पञ्चास्रवमलबहुलार्त्तरौद्रतीव्राभिसन्धान ॥ २० ॥ कार्याकार्यविनिश्चयसक्लेशविशुद्धिलक्षणैर्मूढ । आहारभयपरिग्रहमैथुनसज्ञाकलिग्रस्त ॥ २१ ॥ क्लिष्टाष्टकर्मबन्धनबद्धनिकाचितगुरुर्गतिशतेषु । जन्ममरणैरजस्र बहुविधपरिवर्तनाभ्रान्त ॥ २२ ॥ दु खसहस्रनिरन्तरगुरुभाराक्रान्तकर्षित करुण । विषयसुखानुगततृष कषायवक्तव्यतामेति* ॥ २३ ॥ स क्रोधमानमायालोभैरतिदुर्जयै परामृष्ट । प्राप्नोति याननर्थान् कस्तानुद्देष्टुमपि शक्त ॥ २४ ॥ क्रोधात्प्रीतिविनाश मानाद्विनयोपघातमाप्नोति । शाठ्यात्प्रत्ययहानि सर्वगुणविनाशन लोभात् ॥ २५ ॥ क्रोध परितापकर

सर्वस्योद्वेगकारक क्रोध । वैरानुषङ्गजनक क्रोध क्रोध सुगतिहन्ता ॥ २६ ॥ श्रुतशीलविनयसदूषणस्य धर्मार्थकामविघ्नस्य । मानस्य कोऽव काश मुहूर्तमपि पण्डितो दद्यात् ॥ २७ ॥ मायाशील पुरुषो यद्यपि न करोति किञ्चिदपराधम् । सर्प इवाविश्वास्यो भवति तथाप्यात्मदोषहत ॥ २८ ॥ सर्वविनाशाश्रयिण सर्वव्यसनैकराजमार्गस्य । लोभस्य को मुखगत क्षणमपि दु खान्तरमुपेयात् ॥ २९ ॥ एव क्रोधो मानो माया लोभश्च दु खहेतुत्वात् । सत्त्वाना भवससारदुर्गमार्गप्रणेतार ॥ ३० ॥ ममकाराहङ्कारावेषा मूल पदद्वय भवति । रागद्वेषावित्यपि तस्यैवान्यस्तु पर्याय ॥ ३१ ॥ मायालोभकषायश्चेत्येतद्रागसज्ञित द्वन्द्वम् । क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्ट ॥ ३२ ॥ मिथ्यादृष्ट्यविरमणप्रमादयोगास्तयोर्बल दृष्टम् । तदुपगृहीतावष्टविधकर्मबन्धस्य हेतू तौ ॥ ३३ ॥ स ज्ञानदर्शनावरणवेद्यमोहायुषा तथा नाम्न । गोत्रान्तराययोश्चेति कर्मबन्धोऽष्टधा मौल ॥ ३४ ॥ पञ्चनवद्व्यष्टाविंशतिकश्चतु षट्सप्तगुणभेद । द्विपञ्चभेद इति सप्तनवतिभेदास्तथोत्तरत ॥ ३५ ॥ प्रकृतिरियमनेकविधा स्थित्यनुभावप्रदेशतस्तस्या । तीव्रो मन्दो मध्य इति भवति बन्धोदयविशेष ॥ ३६ ॥ तत्र प्रदेशबन्धो योगात्तदनुभवन कषायवशात् । स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण ॥ ३७ ॥ ता कृष्णनीलकापोततैजसीपद्मशुक्लनामान । श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्य ॥ ३८ ॥ कर्मोदयाद् भवगतिर्भवगतिमूला शरीरनिर्वृत्ति । देहादिन्द्रियविषया विषयनिमित्ते च सुखदु ख ॥ ३९ ॥ दु खद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोष । या या करोति चेष्टा तया तया दु खमादत्ते ॥४०॥ कलरिभितमधुरगान्धर्वतूर्ययोषिद्विभूषणरवाद्यै । श्रोत्रावबद्धहृदयो हरिण इव विनाशमुपयाति ॥ ४१ ॥ गतिविभ्रमेङ्गिताकारहास्यलीलाकटाक्षविक्षिप्त । रूपावेशितचक्षु शलभ इव निपतते विवश ॥ ४२ ॥ स्नानाङ्गरागवर्तिकवर्णकधूपाधिवासपटवासै । गन्धभ्रमितमनस्को मधुकर इव नाशमुपयाति ॥ ४३ ॥ मिष्टान्नपानमांसौदनादिमधुररसविषयगृद्धात्मा । गलयन्त्रपाशबद्धो मीन इव विनाशमुपयाति ॥ ४४ ॥ शयनासनसम्बाधनसुरतस्नानानुलेपनासक्त । स्पर्शव्याकुलितमतिर्गजेन्द्र इव बध्यते मूढ ॥ ४५ ॥ एवमनेके दोषा प्रणष्टशिष्टेष्टदृष्टिचेष्टानाम् । दुर्नियमितेन्द्रियाणा भवन्ति बाधाकरा बहुश ॥४६॥ एकैकविषयसङ्गाद्रागद्वेषातुरा विनष्टास्ते ।

किं पुनरनियमितात्मा जीवः पञ्चेन्द्रियवशार्त्तः ॥४७॥ नहि सोऽस्तीन्द्रियविषयो येनाभ्यस्तेन नित्यतृपितानि । तृप्तिं प्राप्नुयुरक्षाण्यनेकमार्गप्रलीनानि ॥४८॥ कश्चिच्छुभोऽपि विषयः परिणामवशात्पुनर्भवत्यशुभः । कश्चिदशुभोऽपि भूत्वा कालेन पुनः शुभीभवति ॥ ४९ ॥ कारणवशेन यद्यत् प्रयोजनं जायते यथा यत्र । तेन तथा तं विषयं शुभमशुभं वा प्रकल्पयति ॥५०॥ अन्येषां यो विषयः स्वाभिप्रायेण भवति तुष्टिकरः । स्वमतिविकल्पाभिरतास्तमेव भूयो द्विषन्त्यन्ये ॥ ५१ ॥ तानेवार्थान्द्विषतस्तानेवार्थान्प्रलीयमानस्य । निश्चयतोऽस्यानिष्टं न विद्यते किञ्चिदिष्टं वा ॥ ५२ ॥ रागद्वेषोपहतस्य केवलं कर्मबन्ध एवास्य । नान्यः स्वल्पोऽपि गुणोऽस्ति यः परत्रेह च श्रेयान् ॥ ५३ ॥ यस्मिन्निन्द्रियविषये शुभमशुभं वा निवेशयति भावम् । रक्तो वा द्विष्टो वा स बन्धहेतुर्भवति तस्य ॥ ५४ ॥ स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम् । रागद्वेषक्लिन्नस्य कर्मबन्धो भवत्येवम् ॥ ५५ ॥ एव रागद्वेषौ मोहो मिथ्यात्वमविरतिश्चैव । एभिः प्रमादयोगानुगैः समादीयते कर्म ॥ ५६ ॥ कर्ममयः संसारः संसारनिमित्तकं पुनर्दुःखम् । तस्माद्रागद्वेषादयस्तु भवसंततेर्मूलम् ॥ ५७ ॥ एतद्दोषमहासञ्चयजालं शक्यमप्रमत्तेन । प्रशमस्थितेन घनमप्युद्वेष्टयितुं निरवशेषम् ॥ ५८ ॥ अस्य तु मूलनिबन्धं ज्ञात्वा तच्छेदनोद्यमपरस्य । दर्शनचारित्रतपःस्वाध्यायध्यानयुक्तस्य ॥ ५९ ॥ प्राणवधानृतभाषणपरधनमैथुनममत्वविरतस्य । नवकोट्युद्गमशुद्धोञ्छमात्रयात्राधिकारस्य ॥ ६० ॥ जिनभाषितार्थसद्भावभाविनो विदितलोकतत्त्वस्य । अष्टादशशीलसहस्रधारणकृतप्रतिज्ञस्य ॥ ६१ ॥ परिणाममपूर्वमुपागतस्य शुभभावनाध्यवसितस्य । अन्योऽन्यमुत्तरोत्तरविशेषमभिपश्यतः समये ॥ ६२ ॥ वैराग्यमार्गसम्प्रस्थितस्य संसारवासचकितस्य । स्वहितार्थाभिरतमतेः शुभेयमुत्पद्यते चिन्ता—५ ॥ ६३ ॥ भवकोटीभिरसुलभं मानुष्यं प्राप्य कः प्रमादो मे । न च गतमायुर्भूयः प्रत्येत्यपि देवराजस्य ॥ ६४ ॥ आरोग्यायुर्बलसमुदयाश्चला वीर्यमनियतं धर्मे । तल्लब्ध्वा हितकार्ये मयोद्यमः सर्वथा कार्यः ॥ ६५ ॥ शास्त्रागमादृते न हितमस्ति न च शास्त्रमस्ति विनयमृते । तस्माच्छास्त्रागमलिप्सुना विनीतेन भवितव्यम् ॥ ६६ ॥ कुलरूपवचनयौवनधनमित्रैश्वर्यसम्पदपि पुंसाम् । विनयप्रशमविहीना न शोभते निर्जलेव नदी ॥ ६७ ॥ न तथा सुमहार्घ्यैरपि वस्त्राभरणैरलङ्कृतो भाति । श्रुत-

शीलमूलनिकषो विनीतविनयो यथा भाति ॥ ६८ ॥ गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वेऽपि । तस्माद्गुर्वाराधनपरेण हितकाङ्क्षिणा भाव्यम् ॥ ६९ ॥ धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी । गुरुवदनमलयनिसृतो वचनसरसचन्दनस्पर्शः ॥ ७० ॥ दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोके ऽस्मिन् । तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः ॥ ७१ ॥ *विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम् । ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः ॥ ७२ ॥ संवरफलं तपोबलमथ तपसो निर्जरा फलं दृष्टम् । तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥७३॥ योगनिरोधाद्भवसंततिक्षयः संततिक्षयान्मोक्षः । तस्मात्कल्याणानां सर्वेषां भाजनं विनयः *॥७४॥ विनयव्यपेतमनसो गुरुविद्वत्साधुपरिभवनशीलाः । त्रुटिमात्रविषयसङ्गादजरामरवन्निरुद्विग्नाः ॥ ७५ ॥ केचित्सातर्द्धिरसातिगौरवात्साम्प्रतेक्षिणः पुरुषाः । मोहात्समुद्रवायसवदामिषपरा विनश्यन्ति ॥ ७६ ॥ ते जात्यहेतुदृष्टान्तसिद्धमविरुद्धमजरमभयकरम् । सर्वज्ञवाग्रसायनमुपनीतं नाभिनन्दन्ति ॥ ७७ ॥ यद्वत्कश्चित् क्षीरं मधुशर्करया सुसंस्कृतं हृद्यम् । पित्तार्दितेन्द्रियत्वाद्वितथमतिर्मन्यते कटुकम् ॥ ७८ ॥ तद्वन्निश्चयमधुरमनुकम्पया सद्भिरभिहितं पथ्यम् । तथ्यमवमन्यमाना रागद्वेषोदयोद्वृत्ताः ॥ ७९ ॥ जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतमदान्धाः । क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥ ८० ॥ ज्ञात्वा भवपरिवर्ते जातीनां कोटिशतसहस्रेषु । हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात् ॥ ८१ ॥ नैकाञ्जातिविशेषानिन्द्रियनिर्वृत्तिपूर्वकान्सत्त्वाः । कर्मवशाद्गच्छन्त्यत्र कस्य का शाश्वती जातिः ॥ ८२ ॥ रूपबलश्रुतमतिशीलविभवपरिवर्जितांस्तथा दृष्ट्वा । विपुलकुलोत्पन्नानपि ननु कुलमानः परित्याज्यः ॥ ८३ ॥ यस्याशुद्धं शीलं प्रयोजनं तस्य किं कुलमदेन । स्वगुणाभ्यलङ्कृतस्य हि किं शीलवतः कुलमदेन ॥ ८४ ॥ कः शुक्रशोणितसमुद्भवस्य सततं चयापचयिकस्य । रोगजरापाश्रयिणो मदावकाशोऽस्ति रूपस्य ॥ ८५ ॥ नित्यं परिशीलनीये त्वङ्मांसाच्छादिते कलुषपूर्णे । निश्चयविनाशधर्मिणि रूपे मदकारणं किं स्यात् ॥ ८६ ॥ बलसमुदितोऽपि यस्मान्नरः क्षणेन विबलत्वमुपयाति । बलहीनोऽपि च बलवान् संस्कारवशात्पुनर्भवति ॥ ८७ ॥ तस्मादनियतभावं बलस्य सम्यग्विभाव्य बुद्धिबलात् । मृत्युबले चाबलतां मदं न कुर्याद्बलेनापि ॥ ८८ ॥ उदयोप-

शमनिमित्तौ लाभालाभावनित्यकौ मत्वा । नालाभे वैक्लव्यं न च लाभे विस्मयः कार्यः ॥ ८९ ॥ परशक्त्यभिप्रसादात्मकेन किञ्चिदुपभोगयोग्येन । विपुलेनापि यतिवृषा लाभेन मदं न गच्छन्ति ॥ ९० ॥ ग्रहणोद्ग्राहणनवकृतिविचारणार्थावधारणाद्येषु । बुद्ध्यङ्गविधिविकल्पेष्वनन्तपर्यायवृद्धेषु ॥ ९१ ॥ पूर्वपुरुषसिंहानां विज्ञानातिशयसागरानन्त्यम् । श्रुत्वा साम्प्रतपुरुषाः कथं स्वबुद्ध्या मदं यान्ति ॥ ९२ ॥ द्रमकैरिव चटुकर्मकमुपकारनिमित्तकं परजनस्य । कृत्वा यद्वाल्लभ्यकमवाप्यते को मदस्तेन ॥ ९३ ॥ गर्वं परप्रसादात्मकेन वाल्लभ्यकेन यः कुर्यात् । तद्वाल्लभ्यकविगमे शोकसमुदयः परामृशति ॥ ९४ ॥ माषतुषोपाख्यानं श्रुतपर्यायप्ररूपणां चैव । श्रुत्वातिविस्मयकरं च विकरणं स्थूलभद्रमुनेः ॥९५॥ सम्पर्कोद्यमसुलभं चरणकरणसाधकं श्रुतज्ञानम् । लब्ध्वा सर्वमदहरं तेनैव मदः कथं कार्यः ॥ ९६ ॥ एतेषु मदस्थानेषु निश्चये न च गुणोऽस्ति कश्चिदपि । केवलमुन्मादः स्वहृदयस्य संसारवृद्धिश्च ॥ ९७ ॥ जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह । जात्यादिहीनतां परभवे च निःसंशयं लभते ॥ ९८ ॥ सर्वमदस्थानानां मूलोद्घातार्थिना सदा यतिना । आत्मगुणैरुत्कर्षः परपरिवादश्च संत्याज्यः ॥ ९९ ॥ परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्म । नीचैर्गोत्रं प्रतिभवमनेकभवकोटिदुर्मोचम् ॥ १०० ॥ कर्मोदयनिर्वृत्तं हीनोत्तममध्यमं मनुष्याणाम् । तद्विधमेव तिरश्चां योनिविशेषान्तरविभक्तम् ॥ १०१ ॥ देशकुलदेहविज्ञानायुर्बलभोगभूतिवैषम्यम् । दृष्ट्वा कथमिह विदुषां भवसंसारे रतिर्भवति ॥ १०२ ॥ अपरिगणितगुणदोषः स्वपरोभयबाधको भवति यस्मात् । पञ्चेन्द्रियबलविबलो रागद्वेषोदयनिबद्धः ॥ १०३ ॥ तस्माद्रागद्वेषत्यागे पञ्चेन्द्रियप्रशमने च । शुभपरिणामावस्थितिहेतोर्यत्नेन घटितव्यम् ॥१०४॥ तत्कथमनिष्टविषयाभिकाङ्क्षिणा भोगिना वियोगो वै । सुव्याकुलहृदयेनापि निश्चयेनागमः कार्यः ॥ १०५ ॥ आदावत्यभ्युदया मध्ये शृङ्गारहास्यदीप्तरसाः । निकषे विषया बीभत्सकरुणलज्जाभयप्रायाः ॥ १०६ ॥ यद्यपि निषेव्यमाणा मनसः परितुष्टिकारका विषयाः । किंपाकफलादनवद्भवन्ति पश्चादतिदुरन्ताः ॥ १०७ ॥ यद्वच्छाकाष्टादशमन्नं बहुभक्ष्यपेयवत्स्वादु । विषसंयुक्तं भुक्तं विपाककाले विनाशयति ॥ १०८ ॥ तद्वदुपचारसम्भृतरम्यकरागरससेविता विषयाः । भवशतपरम्परास्वपि दुःखविपाकानुबन्ध-

करा ॥ १०९ ॥ अपि पश्यता समक्ष विषयपरिणामनियत पदे पदे मरणम् । येषा विषयेषु रतिर्भवति न तान्मानुषान् गणयेत् ॥ ११० ॥ विषयपरिणामनियमो मनोऽनुकूलविषयेष्वनुप्रेक्ष्य । द्विगुणोऽपि च नित्यमनुग्रहोऽनवद्यश्च सञ्चिन्त्य ॥ १११ ॥ इति गुणदोषविपर्यासदर्शनाद्विषयमूर्च्छितो ह्यात्मा । भवपरिवर्तनभीरुभिराचारमवेक्ष्य परिरक्ष्य ॥ ११२ ॥ सम्यक्त्वज्ञानचारित्रतपोवीर्यात्मको जिनै प्रोक्त । पञ्चविधोऽय विधिवत्साध्वाचार समनुगम्य ॥ ११३ ॥ फ षड्जीवकाययतना लौकिकसन्तानगौरवत्याग । शीतोष्णादिपरीषहविजय सम्यक्त्वमविकम्प्यम् ॥ ११४ ॥ संसारादुद्वेग क्षपणोपायश्च कर्मणा निपुण । वैयावृत्त्योद्योग तपोविधियोपिता त्याग ॥ ११५ ॥ विधिना भैक्ष्यग्रहण स्त्रीपशुपण्डकविवर्जिता शय्या । ईर्याभाषाम्बरभाजनैषणावग्रहा शुद्धा ॥ ११६ ॥ स्थाननिषद्याव्युत्सर्गशब्दरूपक्रिया परान्योऽन्या । पञ्चमहाव्रतदार्ढ्य विमुक्तता सर्वसङ्गेभ्य फ ॥ ११७ ॥ साध्वाचार खल्वयमष्टादशपदसहस्रपरिपठित । सम्यगनुपाल्यमानो रागादीमूलतो हन्ति ॥ ११८ ॥ आचाराध्ययनोक्तार्थभावनाचरणगुप्तहृदयस्य । न तदस्ति कालविवर यत्र क्वचनाभिभवन स्यात् ॥ ११९ ॥ पैशाचिकमाख्यान श्रुत्वा गोपायन च कुलवध्वा । संयमयोगैरात्मा निरन्तर व्यापृत कार्य ॥ १२० ॥ क्षणविपरिणामधर्मा मर्त्यानामृद्धिसमुदया सर्वे । सर्वे च शोकजनका सयोगा विप्रयोगान्ता ॥ १२१ ॥ भोगसुखै किमनित्यैर्भयबहुलै काङ्क्षितै परायत्तै । नित्यमभयमात्मस्थ प्रशमसुख तत्र यतितव्यम् ॥ १२२ ॥ यावत्स्वविषयलिप्सोरक्षसमूहस्य चेष्टते तुष्टौ । तावत्तस्यैव जये वरतरमशठ कृतो यत्न ॥ १२३ ॥ यत्सर्वविषयकाङ्क्षोद्भव सुख प्राप्यते सरागेण । तदनन्तकोटिगुणित मुधैव लभते विगतराग ॥ १२४ ॥ इष्टवियोगाप्रियसम्प्रयोगकाङ्क्षासमुद्भव दु खम् । प्राप्नोति यत्सरागो न सस्पृशति तद्विगतराग ॥ १२५ ॥ प्रशमितवेदकषायस्य हास्यरत्यरतिशोकनिभृतस्य । भयकुत्सानिरभिभवस्य यत्सुख तत्कुतोऽन्येषाम् ॥ १२६ ॥ सम्यग्दृष्टिर्ज्ञानी ध्यानतपोबलयुतोऽप्यनुपशान्त । त लभते न गुण य प्रशमगुणमुपाश्रितो लभते ॥ १२७ ॥ नैवास्ति राजराजस्य तत्सुख नैव देवराजस्य । यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १२८ ॥ सन्त्यज्य लोकचिन्तामात्मपरिज्ञानचिन्तनेऽभिरत । जितलोभरोषमदन सुखमास्ते निर्ज्वर साधु ॥ १२९ ॥ या चेह लोकवार्ता

शरीरयात्रा तपस्विना या च । सद्धर्मचरणवार्त्तानिमित्तक तद्द्वयमपीष्टम् ॥ १३० ॥ लोक खल्वाधार सर्वेषा ब्रह्मचारिणा यस्मात् । तस्माल्लोकविरुद्ध धर्मविरुद्ध च सत्याज्यम् ॥ १३१ ॥ देहो नासाधनको लोकाधीनानि साधनान्यस्य । सद्धर्मानुपरोधात्तस्माल्लोकोऽभिगमनीय ॥ १३२ ॥ दोषेणानुपकारी भवति परो येन येन विद्विष्ट । स्वयमपि तद्दोषपद सदा प्रयत्नेन परिहार्यम् ॥ १३३ ॥ पिण्डैषणानिरुक्त कल्प्याकल्प्यस्य यो विधिः सूत्रे। ग्रहणोपभोगनियतस्य तेन नैवाऽऽमयभय स्यात् ॥१३४॥ व्रणलेपाक्षोपाङ्गवदसङ्गयोगभरमात्रयात्रार्थम् । पन्नग इवाभ्यवहरेदाहार पुत्रपलवच्च ॥ १३५ ॥ गुणवन्मूर्च्छितमनसा तद्विपरीतमपि चाप्रदुष्टेन । दारूपमधृतिर्भवति कल्प्यमास्वाद्यमास्वाद्यम् ॥ १३६ ॥ काल क्षेत्र मात्रा सात्म्य द्रव्यगुरुलाघव स्वबलम् । ज्ञात्वा योऽभ्यवहार्यं भुङ्क्ते किं भेषजैस्तस्य ॥ १३७ ॥ पिण्ड शय्या वस्त्रैषणादि पात्रैषणादि यच्चान्यत् । कल्प्याकल्प्य सद्धर्मदेहरक्षानिमित्तोक्तम् ॥ १३८ ॥ कल्प्याकल्प्यविधिज्ञ सविग्नसहायको विनीतात्मा । दोषमलिनेऽपि लोके प्रविहरति मुनिर्निरुपलेप ॥ १३९ ॥ यद्वत्पङ्काधारमपि पङ्कज नोपलिप्यते तेन । धर्मोपकरणधृतवपुरपि साधुरलेपकस्तद्वत् ॥ १४० ॥ यद्वत्तुरग सत्स्वप्याभरणविभूषणेष्वनभिषक्त । तद्वदुपग्रहवानपि न सङ्गमुपयाति निर्ग्रन्थ ॥ १४१ ॥ ग्रन्थः कर्माष्टविध मिथ्यात्वाविरतिदुष्टयोगाश्च । तज्जयहेतोरशठ सयतते य स वै निर्ग्रन्थ ॥१४२॥ यज्ज्ञानशीलतपसामुपग्रह निग्रह च दोषाणाम् । कल्पयति निश्चये यत्तत्कल्प्यमकल्प्यमवशेषम् (-शिष्टम्?) ॥१४३॥ यत्पुनरुपघातकर सम्यक्त्वज्ञानशीलयोगानाम् । तत्कल्प्यमप्यकल्प्य प्रवचनकुत्साकर यच्च ॥१४४॥ किञ्चिच्छुद्ध कल्प्यमकल्प्य स्यात्स्यादकल्प्यमपि कल्प्यम । पिण्ड शय्या वस्त्र पात्र वा भेषजाद्य वा ॥ १४५ ॥ देश काल पुरुषमवस्थामुपयोगशुद्धपरिणामान् । प्रसमीक्ष्य भवति कल्प्य नैकान्तात्कल्पते कल्प्यम् ॥ १४६ ॥ तच्चिन्त्य तद्भाष्य तत्कार्यं भवति सर्वथा यतिना । नात्मपरोभयबाधकमिह यत्परतश्च सर्वाद्धम् ॥ १४७ ॥ सर्वार्थेष्विन्द्रियसङ्गतेषु वैराग्यमार्गविघ्नेषु । परिसङ्ख्यान कार्यं कार्यं परमिच्छता नियतम् ॥ १४८ ॥ *भावयितव्यमनित्यत्वमशरणत्व तथैकताऽन्यत्वे । अशुचित्व संसार कर्माश्रवसंवरविधिश्च ॥ १४९ ॥ निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च । बोधे.

सुदुर्लभत्वं च भावना द्वादश विशुद्धाः ॥ १५० ॥ इष्टजनसंप्रयोगर्द्धिविषयसुखसंपदस्तथारोग्यम् । देहश्च यौवनं जीवितं च सर्वाण्यनित्यानि ॥ १५१ ॥ जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते । जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥ १५२ ॥ एकस्य जन्ममरणे गतयश्च शुभाशुभा भवावर्ते । तस्मादाकालिकहितमेकेनैवात्मनः कार्यम् ॥ १५३ ॥ अन्योऽहं स्वजनात्परिजनाच्च विभवाच्छरीरकाच्चेति । यस्य नियता मतिरियं न बाधते तं हि शोककलिः ॥ १५४ ॥ अशुचिकरणसामर्थ्यादाद्युत्तरकारणाशुचित्वाच्च । देहस्याशुचिभावः स्थाने स्थाने भवति चिन्त्यः ॥१५५॥ माता भूत्वा दुहिता भगिनी भार्या च भवति संसारे । व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव ॥ १५६ ॥ मिथ्यादृष्टिरविरतः प्रमादवान् यः कषायदण्डरुचिः । तस्य तथाश्रवकर्मणि यतेत तन्निग्रहे तस्मात् ॥ १५७ ॥ या पुण्यपापयोरग्रहणे वाक्कायमानसी वृत्तिः । सुसमाहितो हितः संवरो वरददेशितश्चिन्त्यः ॥ १५७ ॥ यद्वद्विशोषणादुपचितोऽपि यत्नेन जीर्यते दोषः । तद्वत्कर्मोपचितं निर्जरयति संवृतस्तपसा ॥ १५९ ॥ लोकस्याधस्तिर्यग्विचिन्तयेदूर्ध्वमपि च बाहल्यम् । सर्वत्र जन्ममरणे रूपिद्रव्योपयोगांश्च ॥ १६० ॥ धर्मोऽयं स्वाख्यातो जगद्धितार्थं जिनैर्जितारिगणैः । येऽत्र रतास्ते संसारसागरं लीलयोत्तीर्णाः ॥ १६१ ॥ मानुष्यकर्मभूम्यार्यदेशकुलकल्यतायुरुपलब्धौ । श्रद्धाकथकश्रवणेषु सत्स्वपि सुदुर्लभा बोधिः ॥ १६२ ॥ तां दुर्लभां भवशतैर्लब्ध्वाप्यतिदुर्लभा पुनर्विरतिः । मोहाद्रागात्कापथविलोकनाद्गौरववशाच्च ॥ १६३ ॥ तत्प्राप्य विरतिरत्नं विरागमार्गविजयो दुरधिगम्यः । इन्द्रियकषायगौरवपरीषहसपत्नविधुरेण ॥ १६४ ॥ तस्मात्परीषहेन्द्रियगौरवगणनायकान् कषायरिपून् । क्षान्तिबलमार्दवार्जवसंतोषैः साधयेद्धीरः ॥ १६५ ॥ संचिन्त्य कषायाणामुदयनिमित्तमुपशान्तिहेतुं च । त्रिकरणशुद्धमपि तयोः परिहारासेवने कार्ये ॥१६६॥ फ सेव्यः क्षान्तिर्मार्दवमार्जवशौचे च संयमत्यागौ । सत्यस्तपो ब्रह्माकिञ्चन्यानीत्येष धर्मविधिः ॥ १६७ ॥ धर्मस्य दया मूलं न चाक्षमावान् दयां समादत्ते । तस्माद्यः क्षान्तिपरः स साधयत्युत्तमं धर्मम् ॥ १६८ ॥ विनयायत्ताश्च गुणाः सर्वे विनयश्च मार्दवायत्तः । यस्मिन्मार्दवमखिलं स सर्वगुणभाक्त्वमाप्नोति ॥ १६९ ॥ नानार्जवो विशुध्यति न धर्ममाराधयत्यशुद्धात्मा । धर्मादृते न मोक्षो मोक्षात्परमं सुखं

नायत् ॥ १७० ॥ यद्द्रव्योपकरणभक्तपानदेहाधिकारक शौचम् । तद्भ-चति भावशौचानुपरोधाद्यत्नत कार्यम् ॥ १७१ ॥ पञ्चास्रवाद्विरमण पञ्चेन्द्रियनिग्रह कषायजय । दण्डत्रयविरतिश्चेति सयम सप्तदशभेद ॥ १७२ ॥ बान्धवधनेन्द्रियसुखत्यागात्त्यक्तभयविग्रह साधु । त्यक्तात्मा निर्ग्रंथस्त्यक्ताहङ्कारममकार ॥ १७३ ॥ अविसवादनयोग कायमनोवा-गजिह्मता चैव । सत्य चतुर्विध तच्च जिनवरमतेऽस्ति नान्यत्र ॥१७४॥ अनशनमूनोदरता वृत्ते सक्षेपण रसत्याग । कायक्लेश सलीनतेति बाह्य तप प्रोक्तम् ॥ १७५ ॥ प्रायश्चित्तध्याने वैयावृत्त्यविनयावथोत्सर्ग । स्वाध्याय इति तप षट्प्रकारमाभ्यन्तर भवति ॥ १७६ ॥ दिव्यात्काम-रतिसुखात्त्रिविध त्रिविधेन विरतिरिति नवक । औदारिकादपि तथा तद् ब्रह्माष्टादशविकल्पम् ॥ १७७ ॥ अध्यात्मविदो मूर्च्छा परिग्रह वर्णयन्ति निश्चयत । तस्माद्वैराग्येप्सोराकिञ्चन्य परो धर्म ॥ १७८ ॥ दशविध-धर्मानुष्ठायिन सदा रागद्वेषमोहानाम् । दृढरूढघनानामपि भवत्युपशमो ऽल्पकालेन* ॥१७९॥ ममकाराहङ्कारत्यागादतिदुर्जयोद्धतप्रबलान् । हन्ति परीषहगौरवकषायदण्डेन्द्रियव्यूहान् ॥१८०॥ प्रवचनभक्ति श्रुतसम्पदु-द्यमो व्यतिकरश्च सविग्नै । वैराग्यमार्गसद्भावभावधीस्थैर्यजनकानि॥१८१॥ आक्षेपणी विक्षेपणी विमार्गबाधनसमर्थविन्यासा । श्रोतृजनश्रोत्रमन प्र-सादजननी यथा जननी ॥ १८२ ॥ सवेदनी च निर्वेदनी च धर्म्या कथा सदा कुर्यात् । स्त्रीभक्तचौरजनपदकथाश्च दूरात्परित्याज्या ॥ १८३ ॥ यावत्परगुणदोषपरिकीर्तने व्यापृत मनो भवति । तावद्वर विशुद्धे ध्याने व्यग्र मन कर्तुम् ॥ १८४ ॥ शास्त्राध्ययने चाध्यापने च सञ्चिन्तने तथा-त्मनि च । धर्मकथने च सतत यत्न सर्वात्मना कार्य ॥ १८५ ॥ शा-स्विति वाग्विधिविद्भिर्धातु पापठ्यतेऽनुशिष्ट्यर्थ । त्रैङिति च पालनार्थे विनिश्चित सर्वशब्दविदाम् ॥ १८६ ॥ यस्माद्रागद्वेषोद्धतचित्तान् समनु-शास्ति सद्धर्म । सत्रायते च दु खाच्छास्त्रमिति निरुच्यते सद्भि ॥१८७॥ शासनसामर्थ्येन तु सत्राणबलेन चानवद्येन । युक्त यत्तच्छास्त्र तच्चैतत्सर्व-विद्वचनम् ॥१८८॥ □ जीवाऽजीवा पुण्य पापास्रवसवरा सनिर्जरणा । बन्धो मोक्षश्चैते सम्यक् चिन्त्या नव पदार्था ॥ १८९ ॥ जीवा मुक्ता ससारिणश्च ससारिणस्त्वनेकविधा । लक्षणतो विज्ञेया द्वित्रिचतु पञ्चषड् भेदा ॥ १९० ॥ द्विविधाश्चराचराख्यास्त्रिविधा स्त्रीपुनपुसका ज्ञेया ।

नारकतिर्यग्मानुषदेवाश्चतुर्विधाः प्रोक्ताः ॥ १९१ ॥ पञ्चविधास्त्वेकद्वित्रिचतुःपञ्चेन्द्रियास्तु निर्दिष्टाः । क्षित्यम्बुवह्निपवनतरवस्त्रसाश्चेति षड्भेदाः ॥ १९२ ॥ एवमनेकविधानामेकैको विधिरनन्तपर्यायः । प्रोक्तः स्थितिवगाहज्ञानदर्शनादिपर्यायैः ॥१९३॥ सामान्यं खलु लक्षणमुपयोगो भवति सर्वजीवानाम् । साकारोऽनाकारश्च सोऽष्टभेदश्चतुर्धा च ॥ १९४ ॥ ज्ञानाज्ञाने पञ्चत्रिविकल्पे सोऽष्टधा तु साकारः । चक्षुरचक्षुरवधिकेवलदृग्विषयस्त्वनाकारः ॥१९५॥ भावा भवन्ति जीवस्यौदयिकः पारिणामिकश्चैव । औपशमिकः क्षयोत्थः क्षयोपशमजश्च पञ्चैते ॥ १९६ ॥ ते चैकविंशतित्रिद्विनवाष्टादशविधाश्च विज्ञेयाः । षष्ठश्च सान्निपातिक इत्यन्यः पञ्चदशभेदः ॥१९७॥ एभिर्भावैः स्थानं गतिमिन्द्रियसंपदः सुखं दुःखम् । संप्राप्नोतीत्यात्मा * सोऽष्टविकल्पः समासेन ॥ १९८ ॥ द्रव्यं कषाययोगावुपयोगो ज्ञानदर्शने चेति । चारित्रं वीर्यं चेत्यष्टविधा मार्गणा तस्य ॥ १९९ ॥ जीवाजीवानां द्रव्यात्मा सकषायिणां कषायात्मा । योगः सयोगिनां पुनरुपयोगः सर्वजीवानाम् ॥२००॥ ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानाम् । चारित्रं विरतानां तु सर्वसंसारिणां वीर्यम् * ॥२०१॥ द्रव्यात्मेत्युपचारः सर्वद्रव्येषु नयविशेषेण । आत्मादेशादात्मा भवत्यनात्मा परादेशात् ॥२०२॥ एवं संयोगाल्पबहुत्वाद्यैर्नैकशः स परिमृग्यः । जीवस्यैतत्सर्वं स्वतत्त्वमिह लक्षणैर्दृष्टम् ॥ २०३ ॥ उत्पादविगमनित्यत्वलक्षणं यत्तदस्ति सर्वमपि । सदसद्वा भवतीत्यन्यथार्पितानर्पितविशेषात् ॥ २०४ ॥ योऽर्थो यस्मिन्नाभूत् साम्प्रतकाले च दृश्यते तत्र । तेनोत्पादस्तस्य विगमस्तु तस्माद्विपर्यासः ॥ २०५ ॥ साम्प्रतकाले चानागते च यो यस्य भवति सम्बन्धी । तेनाविगमस्तस्येति स नित्यस्तेन भावेन ॥२०६॥ धर्माधर्माकाशानि पुद्गलाः काल एव चाऽजीवाः । पुद्गलवर्जमरूपं तु रूपिणः पुद्गलाः प्रोक्ताः ॥ २०७ ॥ द्व्यादिप्रदेशवन्तो यावदनन्तप्रदेशिकाः स्कन्धाः । परमाणुरप्रदेशो वर्णादिगुणेषु भजनीयः ॥ २०८ ॥ भावे धर्माधर्माम्बरकालाः पारिणामिके ज्ञेयाः । उदयपरिणामि रूपं तु सर्वभावानुगा जीवाः ॥२०९॥ *जीवाजीवा द्रव्यमिति षड्विधं भवति लोकपुरुषोऽयम् । वैशाखस्थानस्थः पुरुष इव कटिस्थकरयुग्मः ॥ २१० ॥ तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् । स्थालमिव च तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥ २११ ॥ सप्तविधोऽधोलोकस्तिर्यग्लोको भवत्यनेकविधः । पञ्च-

दशविधान पुनरूर्ध्वलोक समासेन ॥ २१२ ॥ लोकालोकव्यापकमाकाश मर्त्यलौकिक काल । लोकव्यापि चतुष्टयमवशेष त्वेकजीवो वा ॥ २१३ ॥ धर्माधर्माकाशान्येकैकमत पर त्रिकमनन्तम् । काल विनास्तिकाया जीवमृते चाप्यकर्तॄणि ॥ २१४ ॥ धर्मो गतिस्थितिमता द्रव्याणा गत्युपग्रहविधाता । स्थित्युपकर्ताऽधर्मोऽवकाशदानोपकृद्गगनम् ॥ २१५ ॥ स्पर्शरसगन्धवर्णो शब्दो बन्धश्च सूक्ष्मता स्थौल्यम् । सस्थान भेदतमश्छायोद्योतातपश्चेति ॥ २१६ ॥ कर्मशरीरमनोवाग्विचेष्टितोच्छ्वासदु खसुखदा स्युः । जीवितमरणोपग्रहकराश्च समारिण स्कन्धा ॥ २१७ ॥ परिणामवर्तनाविधिपरापरत्वगुणलक्षण काल । सम्यक्त्वज्ञानचारित्रवीर्यशिक्षागुणा जीवा * ॥ २१८ ॥ पुद्गलकर्म शुभ यत्तत्पुण्यमिति जिनशासने दृष्टम् । यदशुभमथ तत्पापमिति भवति सर्वज्ञनिर्दिष्टम् ॥ २१९ ॥ योगः शुद्ध पुण्याश्रवस्तु पापस्य तद्विपर्यास । वाक्कायमनोगुप्तिर्निराश्रव सवरस्तूक्त ॥ २२० ॥ सवृततपउपधानात्तु निर्जरा कर्मसततिर्बन्ध । बन्धवियोगो मोक्षस्त्विति सक्षेपान्नवपदार्था □ ॥२२१॥ एतेष्वध्यवसायो योऽर्थेषु विनिश्चयेन तत्त्वमिति । 卐 सम्यग्दर्शनमेतत्तु तन्निसर्गादधिगमाद्वा ॥ २२२ ॥ शिक्षागमोपदेशश्रवणान्येकार्थिकान्यधिगमस्य । एकार्थ परिणामो भवति निसर्ग स्वभावश्च ॥ २२३ ॥ एतत्सम्यग्दर्शनमऽनधिगमविपर्ययौ तु मिथ्यात्वम् । +ज्ञानमथ पञ्चभेद तत्प्रत्यक्ष परोक्ष च ॥२२४॥ तत्र परोक्ष द्विविध श्रुतमाभिनिबोधिक च विज्ञेयम् । प्रत्यक्ष त्ववधिमनःपर्यायौ केवल चेति ॥ २२५ ॥ एषामुत्तरभेदविषयादिभिर्भवति विस्तराधिगमः । *एकादीन्येकस्मिन् भाज्यानि त्वाचतुर्भ्य इति ॥२२६॥ *सम्यग्दृष्टेर्ज्ञान सम्यग्ज्ञानमिति नियमत सिद्धम् । *आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसयुक्तम् ॥२२७॥ 卐 सामायिकमित्याद्य छेदोपस्थापन द्वितीय तु । परिहारविशुद्धि सूक्ष्मसम्पराय यथाख्यातम् ॥ २२८ ॥ इत्येतत्पञ्चविध चारित्र मोक्षसाधन प्रवरम् । नैकैरनुयोगनयप्रमाणमार्गै समनुगम्यम् ॥२२९॥ □सम्यक्त्वज्ञानचारित्रसम्पद साधनानि मोक्षस्य । तास्वेकतराभावेऽपि मोक्षमार्गोऽप्यसिद्धिकर ॥ २३० ॥ पूर्वद्वयसम्पद्यपि तेषा भजनीयमुत्तर भवति । पूर्वद्वयलाभ पुनरुत्तरलाभे भवति सिद्ध ॥२३१॥ धर्मावश्यकयोगेषु भावितात्मा प्रमादपरिवर्जी । सम्यक्त्वज्ञानचारित्राणामाराधको भवति ॥ २३२ ॥ आराधनास्तु तेषा तिस्रस्तु ज-

धन्यमध्यमोत्कृष्टा । जन्मभिरष्ट येवै सिध्यन्त्याराधकास्तासाम् ॥२३३॥ तासामाराधनतत्परेण तेष्वेव भवति यतितव्यम् । यतिना तत्परजिनभक्त्युपग्रहसमाधिकरणेन ॥२३४॥ स्वगुणाभ्यासरतमते परवृत्तान्तान्धमूकबधिरस्य । मदमदनमोहमत्सररोषविषादैरधृष्यस्य ॥ २३५ ॥ प्रशमाव्याबाधसुखाभिकाङ्क्षिण सुस्थितस्य सद्धर्मे । तस्य निर्मोपम्य स्यात् सदेवमनुजेऽपि लोकेऽस्मिन् ॥ २३६ ॥ स्वर्गसुखानि परोक्षाण्यत्यन्तपरोक्षमेव मोक्षसुखम् । प्रत्यक्ष प्रशमसुख न परवश च न व्ययप्राप्तम् ॥२३७॥ निर्जितमदमदनाना वाक्कायमनोविकाररहितानाम् । विनिवृत्तपराशानामिहैव मोक्ष सुविहितानाम् ॥ २३८ ॥ शब्दादिविषयपरिणाममनित्य दु खमेव च ज्ञात्वा । ज्ञात्वा च रागद्वेषात्मकानि दु खानि ससारे ॥ २३९ ॥ स्वशरीरे ऽपि न रज्यति शत्रावपि न प्रदोषमुपयाति । रोगजरामरणभयैरव्यथितो यः स नित्यसुखी ॥ २४० ॥ धर्मध्यानाभिरतस्त्रिदण्डविरतस्त्रिगुप्तिगुप्तात्मा । सुखमास्ते निर्द्वंद्वो जितेन्द्रियपरीषहकषाय ॥ २४१ ॥ विषयसुखनिरभिलाष प्रशमगुणगणाभ्यलङ्कृत साधु । द्योतयति यथा न तथा सर्वाण्यादित्यतेजासि ॥ २४२ ॥ ( सम्यग्दृष्टिर्ज्ञानी विरतितपोबलयुतोऽप्यनुपशान्त । स न लभते गुण य प्रशमगुणमुपाश्रितो लभते )॥ सम्यग्दृष्टिर्ज्ञानी विरतितपोध्यानभावनायोगै । शीलाङ्गसहस्राष्टादशकमयत्नेन साधयति ॥२४३॥ धर्माद्भूम्यादीन्द्रियसज्ञाभ्य करणतश्च योगाच्च । शीलाङ्गसहस्राणामष्टादशकस्य निष्पत्ति ॥ २४४ ॥ शीलार्णवस्य पार गत्वा सविग्नसुगममार्गस्य । धर्मध्यानमुपगतो वैराग्य प्राप्नुयाद्योग्यम् ॥ २४५ ॥ आज्ञाविचयमपायविचय च सद्ध्यानयोगमुपसृत्य । तस्माद्विपाकविचयमुपयाति सस्थानविचय च ॥ २४६ ॥ आप्तवचन प्रवचनं चाज्ञाविचयस्तदर्थनिर्णयनम् । आश्रवविकथागौरवपरीषहाद्यैरपायस्तु ॥ २४७ ॥ अशुभशुभकर्मपाकानुचिन्तनार्थो विपाकविचय स्यात् । द्रव्यक्षेत्राकृत्यनुगमन सस्थानविचयस्तु ॥ २४८ ॥ जिनवरवचनगुणगण सञ्चिन्तयतो वधाद्यपायाश्च । कर्मविपाकान् विविधान् सस्थानविधीननेकाश्च ॥ २४९ ॥ नित्योद्विग्नस्यैव क्षमाप्रधानस्य निरभिमानस्य । धुतमायाकल(लि)मलनिर्मलस्य जितसर्वतृष्णस्य॥२५०॥ तुल्यारण्यकुलाकुलविविक्तबन्धुजनशत्रुवर्गस्य । समवासीचन्दनकल्पनप्रदेहादिदेहस्य ॥ २५१ ॥ आत्मारामस्य सत समतृणमणिमुक्तलेष्टुकनकस्य । स्वाध्यायध्यानपराय

णस्य दृढमप्रमत्तस्य ॥ २५२ ॥ अध्यवसायविशुद्धे प्रशस्तयोगैर्विशुद्ध्यमानस्य । चारित्रशुद्धिमग्र्यामवाप्य लेश्याविशुद्धिं च ॥ २५३ ॥ तस्यापूर्वकरणमथ घातिकर्मक्षयैकदेशोत्थम् । ऋद्धिप्रवेकविभवयदुपजात नातभद्रस्य ॥ २५४ ॥ सातर्द्धिरसेष्वगुरु प्राप्यर्द्धिविभूतिमसुलभामन्यै । सक्त प्रशमरतिसुखे न भजति तस्या मुनि सङ्गम् ॥ २५५ ॥ या सर्वसुरवरर्द्धिर्विस्मयनीयापि साऽनगारर्द्धे । नार्घति महस्रभाग कोटिशतसहस्रगुणितापि ॥ २५६ ॥ तत्रयमवाप्य जितविघ्नरिपुर्भवशतसहस्रदुष्प्रापम् । चारित्रमथाख्यात सप्राप्तस्तीर्थकृत्तुल्यम् ॥ २५७ ॥ शुक्लध्यानाद्यद्वयमवाप्य, कर्माष्टकप्रणेतारम् । ससारमूलबीज मूलादुन्मूलयति मोहम् ॥२५८॥ पूर्वं करोत्यनन्तानुबन्धिनाम्ना क्षय कषायाणाम् । मिथ्यात्वमोहगहन क्षपयति सम्यक्त्वमिथ्यात्वम् ॥ २५९ ॥ सम्यक्त्वमोहनीय क्षपयत्यष्टावत कषायाश्च । क्षपयति ततो नपुसकवेद स्त्रीवेदमथ तस्मात् ॥ २६० ॥ हास्यादि तत षट्क क्षपयति तस्माच्च पुरुषवेदमपि । सज्वलनानपि हत्वा प्राप्नोत्यथ वीतरागत्वम् ॥ २६१ ॥ सर्वोद्घातितमोहो निहतक्लेशो यथा हि सर्वज्ञ । भात्यनुपलक्ष्यराह्वशो मुक्त पूर्णचन्द्र इव ॥ २६२ ॥ सर्वेन्धनैकराशीकृतसन्दीप्तो ह्यनन्तगुणतेजा । ध्यानानलस्तप प्रशमसवरहविर्विवृद्धबल ॥ २६३ ॥ क्षपकश्रेणिमुपगत स समर्थ सर्वकर्मिणा कर्म । क्षपयितुमेको यदि कर्मसङ्क्रम स्यात्परकृतस्य ॥ २६४ ॥ परकृतकर्मणि यस्मान्नाक्रामति सङ्क्रमो विभागो वा । तस्मात्सत्त्वाना कर्म यस्य यत्तेन तद्वेद्यम् ॥ २६५ ॥ मस्तकसूचिविनाशात्तालस्य यथा ध्रुवो भवति नाश । तद्वत्कर्मविनाशो हि मोहनीयक्षये नित्यम् ॥ २६६ ॥ छद्मस्थवीतराग काल सोऽन्तर्मुहूर्तमथ भूत्वा । युगपद्विविधावरणान्तरायकर्मक्षयमवाप्य ॥ २६७ ॥ शाश्वतमनन्तमनतिशयमनुपममनुत्तर निरवशेषम् । सपूर्णमप्रतिहत सम्प्राप्त केवल ज्ञानम् ॥ २६८ ॥ कृत्स्ने लोकालोके व्यतीतसाम्प्रतभविष्यत कालान् । द्रव्यगुणपर्यायाणा ज्ञाता द्रष्टा च सर्वार्थै ॥ २६९ ॥ क्षीणचतुष्कर्माशो वेद्यायुर्नामगोत्रवेदयिता । विहरति मुहूर्तकाल देशोना पूर्वकोटिं वा ॥ २७० ॥ तेनाभिन्न चरमभवायुर्दुर्भेद्यमनपवर्तित्वात् । तदुपग्रह च वेद्य तत्तुल्ये नामगोत्रे च ॥२७१॥ ☐ यस्य पुन केवलिन कर्म भवत्यायुषोऽतिरिक्ततरम् । स समुद्घात भगवानथ गच्छति तत्समीकर्तुम् ॥ २७२ ॥ दण्ड प्रथमे समये कपाटमथ चोत्तरे

तथा समये । मन्थानमथ तृतीये लोकव्यापि चतुर्थे तु ॥ २७३ ॥ संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे । सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् ॥ २७४ ॥ औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः । मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ २७५ ॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च । समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् □॥२७६॥ 卐 स समुद्घातनिवृत्तोऽथ मनोवाक्काययोगवान् भगवान् । यतियोग्ययोगयोक्ता योगनिरोधं मुनिरुपैति ॥ २७७ ॥ पञ्चेन्द्रियोऽथ संज्ञी यः पर्याप्तो जघन्ययोगी स्यात् । निरुणद्धि मनोयोगं ततोऽप्यसंख्येयगुणहीनम् ॥२७८॥ द्वीन्द्रियसाधारणयोर्वागुच्छ्वासावधो जयति तद्वत् । पनकस्य काययोगं जघन्यपर्याप्तकस्याधः ॥२७९॥ सूक्ष्मक्रियमप्रतिपाति काययोगोपयोगतो(गस्ततो?) ध्यात्वा । विगतक्रियमनिवर्तित्वमुत्तरं ध्यायति परेण ॥ २८० ॥ चरमभवे संस्थानं यादृग्यस्योच्छ्रयप्रमाणं च । तस्मात्त्रिभागहीनावगाहसंस्थानपरिणाहः ॥ २८१ ॥ सोऽथ मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तः । अपरिमितनिर्जरात्मा संसारमहार्णवोत्तीर्णः ॥ २८२ ॥ ईषद्ध्रस्वाक्षरपञ्चकोद्गिरणमात्रतुल्यकालीयाम् । संयमवीर्याप्तबलः शैलेशीमेति गतलेश्यः ॥२८३॥ पूर्वरचितं च तस्याः समयश्रेण्यामथ प्रकृतिशेषम् । समये समये क्षपयत्यसंख्यगुणमुत्तरोत्तरतः ॥२८४॥ चरमे समये संख्यातीतान्विनिहत्य चरमकर्मांशान् । क्षपयति युगपत् कृत्स्नं वेदायुर्नामगोत्रगणम् ॥ २८५ ॥ सर्वगतियोग्यसंसारमूलकरणानि सर्वभावीनि । औदारिकतैजसकार्मणानि सर्वात्मना त्यक्त्वा ॥ २८६ ॥ देहत्रयनिर्मुक्तः प्राप्यर्जुश्रेणिवीतिमस्पर्शाम् । समयेनैकेनाविग्रहेण गत्वोर्ध्वगतिमप्रतिघः ॥ २८७ ॥ सिद्धिक्षेत्रे विमले जन्मजरामरणरोगनिर्मुक्तः । लोकाग्रगतः सिध्यति साकारेणोपयोगेन 卐 ॥२८८॥ सादिकमनन्तमनुपममव्याबाधसुखमुत्तमं प्राप्तः । केवलसम्यक्त्वज्ञानदर्शनात्मा भवति मुक्तः ॥ २८९ ॥ मुक्तः सन्नाऽभावः स्याल्लक्षण्यात्मत्वतोऽर्थसिद्धेश्च । भावान्तरसन्तानेऽसर्वज्ञाज्ञोपदेशाच्च ॥ २९० ॥ त्यक्त्वा शरीरबन्धनमिहैव कर्माष्टकक्षयं कृत्वा । न स तिष्ठत्यनिबन्धादनाश्रयादप्रयोगाच्च ॥ २९१ ॥ नाधो गौरवविगमादशक्यभावाच्च गच्छति विमुक्तः । लोकान्तादपि न परं प्लवक इवोपग्रहाभावात् ॥ २९२ ॥ योगप्रयोगयोश्चाभावात्तिर्यङ् न तस्य गतिरस्ति । सिद्धस्योर्ध्वं मुक्तस्यालोकान्ताद्गतिर्भवति ॥ २९३ ॥ पूर्वप्र-

योगसिद्धेर्बन्धच्छेदादसङ्गभावाच्च । गतिपरिणामाच्च तथा सिद्धस्योर्ध्वं गति सिद्धा ॥ २९४ ॥ देहमनोवृत्तिभ्या भवत शारीरमानसे दु खे । तदभावात्तदभावे सिद्ध सिद्धस्य सिद्धिसुखम् ॥ २९५ ॥ यस्तु यतिर्घटमान सम्यक्त्वज्ञानशीलसपन्न । वीर्यमनिगूहमान शक्त्यनुरूप प्रयत्नेन ॥२९६॥ सहननायुर्बलकालवीर्यसपत्समाधिवैकल्यात् । कर्मातिगौरवाद्वा स्वार्थमकृत्वोपरममेति ॥ २९७ ॥ सौधर्मादिष्वन्यतमकेषु सर्वार्थसिद्धिचरमेषु । स भवति देवो वैमानिको महर्द्धिद्युतिवपुष्क ॥ २९८ ॥ तत्र सुरलोकसौख्य चिरमनुभूय स्थितिक्षयात्तस्मात् । पुनरपि मनुष्यलोके गुणवत्सु मनुष्यसघेषु ॥२९९॥ जन्म समवाप्य कुलबन्धुविभवरूपबलबुद्धिसपन्न । श्रद्धासम्यक्त्वज्ञानसवरतपोबलसमग्र ॥ ३०० ॥ पूर्वोक्तभावनाभावितान्तरात्मा विधूतससार । सेत्स्यति तत पर वा स्वर्गान्तरितस्त्रिभवभावात् ॥ ३०१ ॥ यश्चेह जिनवरमते गृहाश्रमी निश्चित सुविदितार्थ । दर्शनशीलव्रतभावनाभिरभिरञ्जितमनस्क ॥ ३०२ ॥ स्थूलवधानृतचौर्यपरस्त्रीरत्यरतिवर्जित सततम् । दिग्व्रतमूर्ध्वं(-मिह ?)देशावकाशिकमनर्थविरति च ॥ ३०३ ॥ सामायिक च कृत्वा पौषधमुपभोगपारिमाण्य च । न्यायागत च कल्प्य विधिवत्पात्रेषु विनियोज्यम् ॥ ३०४ ॥ चैत्यायतनप्रस्थापनानि च कृत्वा शक्तित प्रयत । पूजाश्च गन्धमाल्याधिवासधूपप्रदीपाद्या ॥ ३०५ ॥ प्रशमरतिनित्यतृषितो जिनगुरुसाधुजनवन्दनाभिरत । सलेखना च काले योगेनाराध्य सुविशुद्धाम् ॥ ३०६ ॥ प्राप्त कल्पेष्विन्द्रत्व वा सामानिकत्वमन्यद्वा । स्थानमुदार तत्रानुभूय च सुख तदनुरूपम् ॥ ३०७ ॥ नरलोकमेत्य सर्वगुणसपद दुर्लभा पुनर्लब्ध्वा । शुद्ध स सिद्धिमेष्यति भवाष्टकाभ्यन्तरे नियमात् ॥ ३०८ ॥ इत्येव प्रशमरते फलमिह स्वर्गापवर्गयोश्च शुभम् । सप्राप्यतेऽनगारैरगारिभिश्चोत्तरगुणाढ्यै ॥ ३०९ ॥ जिनशासनार्णवादाकृष्टा धर्मकथिकामिमा श्रुत्वा । रत्नाकारादिव जरत्कपर्दिकामुद्धृता भक्त्या ॥ ३१० ॥ सद्भिर्गुणदोषज्ञैर्दोषानुत्सृज्य गुणलवा ग्राह्या । सर्वात्मना च सतत प्रशमसुखायैव यतितव्यम् ॥३११॥ यच्चासमजसमिह छन्द शब्दसमयार्थतो(मया ?)ऽभिहितम् । पुत्रापराधवन्मम मर्षयितव्य बुद्धै सर्वम् ॥ ३१२ ॥ सर्वसुखमूलबीज सर्वार्थविनिश्चयप्रकाशकरम् । सर्वगुणसिद्धिसाधनधनमर्हच्छासन जयति ॥ ३१३ ॥

॥ समाप्तमिद श्रीवाचकेन्द्रोमास्वामिविरचित श्रीप्रशमरतिप्रकरणम् ॥

## श्रीहृदयप्रदीपषट्त्रिंशिका ।

शब्दादिपञ्चविषयेषु विचेतनेषु, योऽन्तर्गतो हृदि विवेककला व्यनक्ति । यस्माद् भवान्तरगतान्यपि चेष्टितानि प्रादुर्भवन्त्यनुभव तमिम भजेथा ॥ १ ॥ जानन्ति केचिन्नतु कर्तुमीशाः, कर्तुं क्षमा ये न च ते विदन्ति । जानन्ति तत्त्व प्रभवन्ति कर्तुं ते केऽपि लोके विरला भवन्ति ॥ २ ॥ सम्यग् विरक्तिर्ननु यस्य चित्ते, सम्यग् गुरुर्यस्य च तत्त्ववेत्ता । सदानुभूत्या दृढनिश्चयो यस्तस्यैव सिद्धिर्न हि चापरस्य ॥ ३ ॥ विग्रह ऊर्मिनिकायसङ्कुल दु खद हृदि विवेचयन्ति ये । गुप्तिरन्धमिव चेतन हि ते, मोचयन्ति तनुयन्त्रयन्त्रितम् ॥४॥ भोगार्थमेतद् भविना शरीरम्, ज्ञानार्थमेतत् किल योगिना वै । जाता विष चेद्विषया हि सम्यग्-ज्ञानात्तत किं कुणपस्य पुष्ट्या ॥ ५ ॥ त्वङ्मांसमेदोऽस्थिपुरीषमूत्रपूर्णेऽनुराग कुणपे क्व ते । द्रष्टा च वक्ता च विवेकरूपस्त्वमेव साक्षात् निमु मुक्षसीत्थम् ॥ ६ ॥ धन न केषा निधन गत वै, दरिद्रिणः के धनिनो न दृष्टा । दु खैकहेतुत्र धनेऽतितृष्णा त्यक्त्वा सुखी स्यादिति मे विचार ॥ ७ ॥ ससारदु खान्न परोऽस्ति रोग, सम्यग्विचारात् परमौषध न । तद्रोगदु खस्य विनाशनाय, सच्छास्त्रतोय क्रियते विचार ॥८॥ अनित्यताया यदि चेत् प्रतीतिस्तत्त्वस्य निष्ठा च गुरुप्रसादात् । सुखी हि सर्वत्र जने वने च, नो चेद्वने चाथ जनेषु दु खी ॥ ९ ॥ मोहान्धकारे भ्रमतीह तावत्, ससारदु खैश्च कदर्थ्यमान । यावद्विवेकार्कमहोदयेन, यथास्थित पश्यति नात्मरूपम् ॥ १० ॥ अर्थो ह्यनर्थो बहुधा मतोऽयम्, स्त्रीणा चरित्राणि शठोपमानि । विषेण तुल्या विषयाश्च तेषा, येषा हृदि स्वात्मलयानुभूतिः ॥ ११ ॥ कार्यं च किं ते परदोषदृष्ट्या, कार्यं च किं ते परचिन्तया च । वृथा कथ खिद्यसि बालबुद्धे, कुरु स्वकार्यं त्यज सर्वमन्यत् ॥१२॥ यस्मिन् कृते कर्मणि सौख्यलेशो दु खानुबन्धस्य तथास्ति नान्त । मनोऽभिलापो मरण हि यावत्, मूर्खोऽपि कुर्यात् खलु तत्र कर्म ॥ १३ ॥ यदर्जित वै वयसाऽखिलेन, ध्यान तपो ज्ञानमुख च सत्यम् । क्षणेन सर्वं प्रदहत्यहो तत्, कामो बली प्राप्य बल(छल ?)यतीनाम् ॥ १४ ॥ बलादसौ मोहरिपुर्जनाना ज्ञान विवेक च निराकरोति । मोहाभिभूत हि जगद्विनष्ट तत्त्वावबोधादपयाति मोह ॥ १५ ॥ सर्वत्र सर्वस्य सदा प्रवृत्तिर्दु खस्य नाशाय सुखस्य हेतो । तथापि दु ख न विनाशमेति सुख न कस्यापि

भजेत् स्थिरत्वम् ॥ १६ ॥ यत् कृत्रिमं वैषयिकादि सौख्यम्, भ्रमन् भवे को न लभेत मर्त्यः । सर्वेषु चैवाधमसमध्यमेषु यद् दृश्यते तत्र किमद्भुतं च ॥ १७ ॥ क्षुधातृषाकामविकाररोषहेतुश्च तद् भेषजवद्वदन्ति । तदत्र तत्र क्षणिकं प्रयासकृत्, यतीश्वरा दूरतरं त्यजन्ति ॥ १८ ॥ गृहीतलिङ्गस्य च चेद्धनाशा, गृहीतलिङ्गो विषयाभिलाषी । गृहीतलिङ्गो रसलोलुपश्चेद्, विडम्बनं नास्ति ततोऽधिकं हि ॥ १९ ॥ ये लुब्धचित्ता विषयार्थभोगे बहिर्विरागा हृदि बद्धरागाः । ते दाम्भिका वेषधराश्च धूर्ता मनांसि लोकस्य तु रञ्जयन्ति ॥ २० ॥ मुग्धश्च लोकोऽपि हि यत्र मार्गे निवेशितस्तत्र रतिं करोति । धूर्तस्य वाक्यैः परिमोहितानां केषां न चित्तं भ्रमतीह लोके ॥ २१ ॥ ये निःस्पृहास्त्यक्तसमस्तरागास्तत्त्वैकनिष्ठा गलिताभिमानाः । सन्तोषपोषैकविलीनवाञ्छास्ते रञ्जयन्ति स्वमनो न लोकम् ॥ २२ ॥ तावद्विवादी जनरञ्जकश्च, यावन्न चैवात्मरसे सुमग्नः । चिन्तामणिं प्राप्य वरं हि लोके, जने जने कः कथयन् प्रयाति ॥ २३ ॥ यथा विरोधोऽपि च दर्शनानाम्, तथैव तेषां शतशश्च भेदाः । नानापथे सर्वजनः प्रवृत्तः, को लोकमाराधयितुं समर्थः ॥ २४ ॥ तदेव राज्यं हि धनं तदेव, तपस्तदेवेह कला च सैव । स्वस्थे भवेच्छ्रीनलतासये चेन्नो चेद् वृथा सर्वमिदं हि मन्ये ॥ २५ ॥ रुष्टैर्जनैः किं यदि चित्तशान्तिस्तुष्टैर्जनैः किं यदि चित्ततापः । प्रीणाति नो नैव दुनोति चान्यान्, स्वस्थः सदोदासपरो हि योगी ॥ २६ ॥ एकः पापात् पतति नरके, याति पुण्यात् स्वरेकः, पुण्यापुण्यप्रचयविगमात् मोक्षमेकः प्रयाति । सङ्गान्नूनं न भवति सुखम्, न द्वितीयेन कार्यम्, तस्मादेको विचरति सदानन्दसौख्येन पूर्णः ॥ २७ ॥ त्रैलोक्यमेतद् बहुभिर्जितं यैर्मनोजये तेऽपि यतो न शक्ताः । मनोजयस्यात्र पुरो हि तस्मात्, तृणं त्रिलोकीविजयं वदन्ति ॥ २८ ॥ मनोलयान्नास्ति परो हि योगो ज्ञानं तु तत्त्वार्थविचारणाच्च । समाधिसौख्यान्न परं च सौख्यम्, संसारसारं त्रयमेतदेव ॥२९॥ या सिद्धयोऽष्टावपि दुर्लभा ये, रसायनं चाञ्जनधातुवादाः । ध्यानानि मन्त्राश्च समाधियोगाश्चित्ते प्रसन्ने विषवद् भवन्ति ॥३०॥ विन्दन्ति तत्त्वं न यथास्थितं वै, सङ्कल्पचिन्ताविषयाकुला ये । संसारदुःखैश्च कदर्थितानाम्, स्वप्नेऽपि तेषां न समाधिसौख्यम् ॥३१॥ श्लोको वरं परमतत्त्वपथप्रकाशी, न ग्रन्थकोटिपठनं जनरञ्जनाय । सञ्जीवनीति वरमौषधमेकमेव, व्यर्थश्रमप्रजननो न तु मूल-

भार ॥३२॥ तावत् सुखेच्छा विषयादिभोगे, यावन् मनः स्वास्थ्यसुखं न वेत्ति। लब्धे मन स्वास्थ्यसुखैकलेशे, त्रैलोक्यराज्येऽपि न तस्य वाञ्छा ॥ ३३ ॥ न देवराजस्य न चक्रवर्तिनस्तद्वै सुखं रागयुतस्य मध्ये । यद्वीतरागस्य मुने सदात्मनिष्ठस्य चित्ते स्थिरता प्रयाति ॥ ३४ ॥ यथा यथा कार्यशताकुलं वै, क्षुत्रापि नो विश्रमतीह चित्तम्। तथा तथा तत्त्वमिदं दुराप हृदिस्थितं सारविचारहीने ॥ ३५ ॥ शमसुखरसलेशात् द्वेष्यता स प्रयाता विविधविषयभोगात्यन्तवाञ्छाविशेषाः । परमसुखमिदं यद् भुज्यतेऽन्त समाधौ, मनसि यदि तदा ते शिष्यते किं वदान्यत् ॥ ३६ ॥

---

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यचरणकजचञ्चरीक
गुर्जरसम्राट्श्रीकुमारपालविरचित साधारणजिनस्तवनम् ॥

नम्राखिलाखण्डलमौलिरत्नरश्मिच्छटापल्लविताङ्घ्रिपीठ । विध्वस्तविश्वव्यसनप्रबन्ध, त्रिलोकबन्धो जयताज्जिनेन्द्र ॥१॥ मूढोऽस्म्यहं विज्ञपयामि यत्त्वामपेतराग भगवन् कृतार्थम् । नहि प्रभूणामुचितस्वरूपनिरूपणाय क्षमतेऽर्थिवर्गः ॥ २ ॥ मुक्तिं गतोऽपीश विशुद्धचित्ते गुणाधिरोपेण ममासि साक्षात्। भानुर्दवीयानपि दर्पणेंऽशुसङ्क्रान्त किं द्योतयते गृहान्त ॥ ३ ॥ तव स्तवेन क्षयमङ्गभाजा भजन्ति जन्मार्जितपातकानि । किंयच्चर चण्डरुचेर्मरीचिस्तोमे तमांसि स्थितिमुद्वहन्ति ॥ ४ ॥ शरण्य कारुण्यपरः परेषा निहंसि मोहज्वरमाश्रितानाम् । मम त्वदाज्ञा वहतोपि मूर्ध्ना शान्तिं न यात्येष कुतोऽपि हेतो ॥ ५ ॥ भयाटवीलङ्घनसार्थवाह, त्वामाश्रितो मुक्तिमहं यियासु । कषायचौरैर्जिन लुप्यमानं रत्नत्रयं मे तदुपेक्षसे किम् ॥६॥ लब्धोऽसि स त्वं मयका महात्मा भवाम्बुधौ बभ्रमता कथंचित्। आ पापपिण्डेन नतो न भक्त्या, न पूजितो नाथ नतु स्तुतोऽसि ॥ ७ ॥ संसारचक्रे भ्रमयन् कुबोधदण्डेन मां कर्ममहाकुलालः । करोति दुःखप्रचयस्थभाण्डम्, ततः प्रभो रक्ष जगच्छरण्य ॥ ८ ॥ कदा त्वदाज्ञाकरणाप्ततत्त्वस्त्यक्तवा ममत्वादि भवैककन्दम् । आत्मैकसारो निरपेक्षवृत्तिर्मोक्षेऽप्यनिच्छो भवितास्मि नाथ ॥ ९ ॥ तव त्रियामापतिकान्तिकान्तैर्गुणैर्नियम्यात्ममनःप्लवङ्गम् । कदा त्वदाज्ञाऽमृतपानलोल , स्वामिन् परब्रह्मरतिं करिष्ये ॥ १० ॥ एतावतीं भूमिमहं त्वदङ्घ्रिपद्मप्रसादाद्गतवानधीश । हठेन पापास्तदपि स्मराद्या ही मामका-

येषु नियोनयन्ति ॥ ११ ॥ भद्र न किं त्वय्यपि नाथनाथे, सम्भाव्यते मे यदपि स्मराद्या । अपाक्रियन्ते शुभभावनाभि, धृष्टिं न मुञ्चति तथापि पापा ॥ १२ ॥ भवाम्बुराशौ भ्रमत कदापि, मन्ये न मे लोचनगोचरोऽभू । निस्सीमसीमन्तकनारकादिदु खातिथित्व कथमन्यथेश ॥१३॥ चक्रासिचापाङ्कुशवज्रमुख्यै, सल्लक्षणैर्लक्षितमङ्घ्रियुग्मम् । नाथ त्वदीय शरण गतोऽस्मि, दुर्वारमोहादिविपक्षभीत ॥ १४ ॥ अगण्यकारुण्य शरण्य पुण्य, सर्वज्ञ निष्कन्टक विश्वनाथ । दीन हताश शरणागत च, मा रक्ष रक्ष स्मरभिल्लभल्ले ॥ १५ ॥ त्वया विना दुष्कृतचक्रवाल नान्य क्षय नेतुमल ममेश । किंवा विपक्षप्रतिचक्रमूलम्, चक्र विना च्छेत्तुमलम्भविष्णु ॥ १६ ॥ यद्देवदेवोऽसि महेश्वरोऽसि, बुद्धोऽसि विश्वत्रयनायकोऽसि । तेनान्तरङ्गारिगणाभिभूतस्तवाग्रतो रोदिमि हा सखेदम् ॥ १७ ॥ स्वामिन्नधर्मव्यसनानि हित्वा, मन समाधौ निदधामि यावत् । तावत्क्रुधैवान्तरवैरिणो मामनल्पमोहान्ध्यवश नयन्ति ॥१८॥ त्वदागमाद्वेद्मि सदैव देव, मोहादयो यन्मम वैरिणोऽमी । तथापि मूढस्य पराप्तबुद्ध्या तत्सन्निधौ ह्री न किमप्यकृत्यम् ॥१९॥ म्लेच्छैर्नृशंसैरतिराक्षसैश्च, विडम्बितोऽमीभिरनेकशोऽहम् । प्राप्तस्त्वत्स्मरणं भुवनैकवीर, त्रायस्व मा यत्तव पाल्लीयम् ॥ २० ॥ हित्वा स्वदेहेऽपि ममत्वबुद्धिं श्रद्धापवित्रीकृतसद्विवेक । मुक्तान्यसङ्ग समशत्रुमित्र, स्वामिन् कदा संयममातनिष्ये ॥ २१ ॥ त्वमेव देवो मम वीतराग, धर्मो भवद्दर्शितधर्म एव । इति स्वरूप परिभाव्य तस्मान्नोपेक्षणीयो भवति स्वभृत्य ॥२२॥ जिता निताशेषसुरासुराद्या, कामादय काममभी त्वयेश । त्वा प्रत्यशक्ता स्तव सेवक तु, निघ्नन्ति हि मा परुष रुषैव ॥ २३ ॥ सामर्थ्यमेतद्भवतोऽस्ति सिद्धिं सत्त्वानशेषानपि नेतुमीश । क्रियाविहीन भवदङ्घ्रिलीनम्, दीन न किं रक्षसि मा शरण्य ॥ २४ ॥ त्वत्पादपद्मद्वितय जिनेन्द्र, स्फुरत्यनन्त हृदि यस्य पुस । विश्वत्रयीश्रीरपि नूनमेति, तत्राश्रयार्थं सहचारिणीव ॥ २५ ॥ अह प्रभो निर्गुणचक्रवर्ती, क्रूरो दुरात्मा हतक, सपाप्मा । ही दु खराशौ भववारिराशौ, यस्मान्निमग्नोऽस्मि भवद्विमुक्त ॥ २६ ॥ स्वामिन्निमग्नोऽस्मि सुधासमुद्रे, यन्नेत्रपात्रातिथिरद्य मेऽभू । चिन्तामणौ स्फूर्जति पाणिपद्मे, पुसामसाध्यो नहि कश्चिदर्थ ॥ २७ ॥ त्वमेव ससाररमहाम्बुराशौ, निमज्जतो मे जिन यानपात्रम् । त्वमेव मे श्रेष्ठसुखैकधाम,

विमुक्तिरामाघटनाभिराम ॥ २८ ॥ चिन्तामणिस्तस्य जिनेश पाणौ, कल्पद्रुमस्तस्य गृहाङ्गणस्थ । नमस्कृतो येन सदापि भक्त्या, स्तोत्रै स्तुतै दामभिरर्चितोऽसि ॥ २९ ॥ निमील्य नेत्रे मनस स्थिरत्व विधाय याव न्निन चिन्तयामि । त्वमेव तावन्न परोऽस्ति देवो नि शेषकर्मक्षयहेतुर ॥ ३० ॥ भक्त्या स्तुता अपि परे परया, परेभ्यो मुक्तिं जिनेन्द्र ददते न कथञ्चनापि । सिक्ता सुधारसघटैरपि निम्बवृक्षा विश्राणयन्ति नहि चूत फल कदाचित् ॥ ३१ ॥ भवजलनदिमध्यान्नाथ निस्तार्य कार्ये, शिव नगरकुटुम्बी निर्गुणोऽपि त्वयाऽहम । नहि गुणमगुण वा सश्रिताना महान्तो निरुपमकरुणार्द्रा सर्वथा चिन्तयन्ति ॥ ३२ ॥ प्राप्तस्त्व बहुभि शुभै-स्त्रिजगतश्चूडामणिर्देवता, निर्वाणप्रतिभूरसावपि गुरु श्रीहेमचन्द्रप्रभु । तन्नात परमस्ति वस्तु किमपि स्वामिन् यदभ्यर्थये, किन्तु त्वद्वचनादर प्रतिभवम, स्ताद्वर्द्धमानो मम ॥ ३३ ॥ इति साधारणजिनस्तवनम् ॥

---

## श्रीरत्नाकरपञ्चविंशतिका

श्रेय श्रिया मङ्गलकेलिसद्म! नरेन्द्रदेवेन्द्रनताङ्घ्रिपद्म! । सर्वज्ञ! सर्वा-तिशयप्रधान! चिर जय ज्ञानकलानिधान! ॥ १ ॥ जगत्त्रयाधार! कृपा वतार! दुर्वारससारविकारवैद्य! । श्रीवीतराग! त्वयि मुग्धभावाद्विज्ञ-प्रभो! विज्ञपयामि किञ्चित् ॥ २ ॥ किं बाललीलाकलितो न बाल, पित्रो पुरो जल्पति निर्विकल्प । तथा यथार्थं कथयामि नाथ! निजाशय सानुशयस्तवाग्रे ॥ ३ दत्त न दान परिशीलित च न शालि शील न तपो-ऽभितप्तम । शुभो न भावोऽप्यभवद्भवेऽस्मिन् विभो! मया भ्रान्तमहो मुधैव ॥ ४ ॥ दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण । ग्रस्तोऽभिमानाजगरेण, माया–जालेन बद्धोऽस्मि कथ भजे त्वाम् ॥ ५ ॥ कृत मयाऽमुत्र हित न चेहलोकेऽपि लोकेश! सुख न मेऽभूत् । अस्मा दृशा केवलमेव जन्म, जिनेश! जज्ञे भवपूरणाय ॥ ६ ॥ मन्ये मनो यन्न मनोज्ञवृत्त, त्वदास्यपीयूषमयूखलाभात् । द्रुत महानन्दरस कठोरमस्मादृशा देव तदश्मतोऽपि ॥ ७ ॥ त्वत्त सुदु प्राप्यमिद मयाप्त रत्नत्रय भूरिभव-भ्रमेण । प्रमादनिद्रावशतो गत तत्, कस्याग्रतो नायक! पूत्करोमि ॥८॥ वैराग्यरङ्गोऽपरवञ्चनाय, धर्मोपदेशो जनरञ्जनाय । वादाय विद्याऽध्ययन च मेऽभूत्, कियद् ब्रुवे हास्यकर स्वमीश! ॥९॥ परापवादेन मुख सदोषम्,

नेत्रं परस्त्रीजनवीक्षणेन । चेतः पराऽपायविचिन्तनेन कृतं भविष्यामि कथं विभोऽहम् ॥ १० ॥ विडम्बितं यत्स्मरघस्मरार्तिदशावशात्स्वं विषयान्धलेन । प्रकाशितं तद्भवतो ह्रियैव, सर्वज्ञ ! सर्वं स्वयमेव वेत्सि ॥ ११ ॥ ध्वस्तोऽन्यमन्त्रैः परमेष्ठिमन्त्रं, कुशास्त्रवाक्यैर्निहतागमोक्तिः । कर्तुं वृथा कर्म कुदेवसङ्गादवाञ्छि ही नाथ मतिभ्रमो मे ॥ १२ ॥ विमुच्य दृग्लक्ष्यगतं भवन्तम्, ध्याता मया मूढधिया हृदन्तः । कटाक्षवक्षोजगभीरनाभिकटीतटीया सुदृशां विलासाः ॥ १३ ॥ लोलेक्षणावक्त्रनिरीक्षणेन, यो मानसे रागलवो विलग्नः । न शुद्धसिद्धान्तपयोधिमध्ये, धौतोऽप्यगात्तारक ! कारणं किम् ॥ १४ ॥ अङ्गं न चङ्गं न गणो गुणानां, न निर्मलः कोऽपि कलाविलासः । स्फुरत्प्रभा न प्रभुता च कापि, तथाप्यहङ्कारकदर्थितोऽहम् ॥ १५ ॥ आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः । यत्नश्च भैषज्यविधौ न धर्मे, स्वामिन्महामोहविडम्बना मे ॥ १६ ॥ नात्मा न पुण्यं न भवो न पापं, मया विटानां कटुगीरपीयम् । अधारि कर्णे त्वयि केवलार्के, परिस्फुटे सत्यपि देव ! धिङ् माम् ॥ १७ ॥ न देवपूजा न च पात्रपूजा, न श्राद्धधर्मश्च न साधुधर्मः । लब्ध्वापि मानुष्यमिदं समस्तं, कृतं मयाऽरण्यविलापतुल्यम् ॥ १८ ॥ चक्रे मयाऽसत्स्वपि कामधेनुकल्पद्रुचिन्तामणिषु स्पृहार्त्तिः । न जैनधर्मे स्फुटशर्मदेऽपि, जिनेश ! मे पश्य विमूढभावम् ॥ १९ ॥ सद्भोगलीला न च रोगकीला, धनागमो नो निधनागमश्च । दारा न कारा नरकस्य चित्ते, व्यचिन्ति नित्यं मयकाऽधमेन ॥ २० ॥ स्थितं न साधोर्हृदि साधुवृत्तात्, परोपकारान्न यशोऽर्जितं च । कृतं न तीर्थोद्धरणादि कृत्यं, मया मुधा हारितमेव जन्म ॥ २१ ॥ वैराग्यरङ्गो न गुरूदितेषु, न दुर्जनानां वचनेषु शान्तिः । नाऽध्यात्मलेशो मम कोऽपि देव, तार्यः कथङ्कारमयं भवाब्धिः ॥ २२ ॥ पूर्वं भवेऽकारि मया न पुण्यमागामिजन्मन्यपि नो करिष्ये । यदीदृशोऽहं मम तेन नष्टा, भूतोद्भवद्भाविभवत्रयीश ! ॥ २३ ॥ किं वा मुधाऽहं बहुधा सुधाभुक्पूज्य त्वदग्रे चरितं स्वकीयम् । जल्पामि यस्मात् त्रिजगत्स्वरूपनिरूपकस्त्वं कियदेतदत्र ॥ २४ ॥ दीनोद्धारधुरन्धरस्त्वदपरो नास्ते मदन्यः कृपापात्रं नात्र जने जिनेश्वर ! तथाऽप्येतां न याचे श्रियम् । किंत्वर्हन्निदमेव केवलमहो सद्बोधिरत्नं शिव, श्रीरत्नाकर ! मङ्गलैकनिलय ! श्रेयस्कर प्रार्थये ॥ २५ ॥ इति श्रीरत्नाकरपञ्चविंशतिका

## वाचकेन्द्रोमास्वातिविरचित स्वोपज्ञभाष्यगतसम्बन्धकारिकादियुत श्रीतत्त्वार्थाधिगमसूत्रम् ।

सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति । दुःखनिमित्तमपीदं तेन सुलब्धं भवति जन्म ॥ १ ॥ जन्मनि कर्मक्लेशैरनुबद्धेऽस्मिंस्तथा प्रयतितव्यम् । कर्मक्लेशाभावो यथा भवत्येष परमार्थः ॥ २ ॥ परमार्थालाभे वा दोषेष्वारम्भकस्वभावेषु । कुशलानुबन्धमेव स्यादनवद्यं यथा कर्म ॥ ३ ॥ कर्माहितमिह चामुत्र चाधमतमो नरः समारभते । इहफलमेव त्वधमो विमध्यमस्तूभयफलार्थम् ॥ ४ ॥ परलोकहितायैव प्रवर्तते मध्यमः क्रियासु सदा । मोक्षायैव तु घटते विशिष्टमतिरुत्तमः पुरुषः ॥५॥ यस्तु कृतार्थोऽप्युत्तममवाप्य धर्मं परेभ्य उपदिशति । नित्यं स उत्तमेभ्योऽप्युत्तम इति पूज्यतम एव ॥ ६ ॥ तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके । देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानाम् ॥ ७ ॥ अभ्यर्चनादर्हतां मनःप्रसादस्ततः समाधिश्च । तस्मादपि निःश्रेयसमतो हि तत्पूजनं न्याय्यम् ॥ ८ ॥ तीर्थप्रवर्तनफलं यत्प्रोक्तं कर्म तीर्थकरनाम । तस्योदयात्कृतार्थोऽप्यर्हंस्तीर्थं प्रवर्तयति ॥९॥ तत्स्वाभाव्यादेव प्रकाशयति भास्करो यथा लोकम् । तीर्थप्रवर्तनाय प्रवर्तते तीर्थकर एवम् ॥ १० ॥ यः शुभकर्मासेवनभावितभावो भवेष्वनेकेषु । जज्ञे ज्ञातेक्ष्वाकुषु सिद्धार्थनरेन्द्रकुलदीपः ॥ ११ ॥ ज्ञानैः पूर्वाधिगतैरप्रतिपतितैर्मतिश्रुतावधिभिः । त्रिभिरपि शुद्धैर्युक्तः शैत्यद्युतिकान्तिभिरिवेन्दुः ॥ १२ ॥ शुभसारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणयुक्तः । जगति महावीर इति त्रिदशैर्गुणतः कृताभिख्यः ॥ १३ ॥ स्वयमेव बुद्धतत्त्वः सत्त्वहिताभ्युद्यताचलितसत्त्वः । अभिनन्दितशुभसत्त्वः सेन्द्रैर्लोकान्तिकैर्देवैः ॥१४॥ जन्मजरामरणार्तं जगदशरणमभिसमीक्ष्य निःसारम् । स्फीतमपहाय राज्यं शमाय धीमान् प्रवव्राज ॥ १५ ॥ प्रतिपद्याशुभशमनं निःश्रेयससाधकं श्रमणलिङ्गम् । कृतसामायिककर्मा व्रतानि विधिवत्समारोप्य ॥ १६ ॥ सम्यक्त्वज्ञानचारित्रसंवरतपःसमाधिबलयुक्तः । मोहादीनि निहत्याशुभानि चत्वारि कर्माणि ॥ १७ ॥ केवलमधिगम्य विभुः स्वयमेव ज्ञानदर्शनमनन्तम् । लोकहिताय कृतार्थोऽपि देशयामास तीर्थमिदम् ॥ १८ ॥ द्विविधमनेकद्वादशविधं महाविषयममितगमयुक्तम् । संसारार्णवपारगमनाय दुःखक्षयायालम् ॥ १९ ॥ ग्रन्थार्थवचनपटुभिः प्रयत्नवद्भिरपि वादिभिः-

र्निपुणैः । अनभिभवनीयमन्यैर्भास्कर इव सर्वतेजोभिः ॥ २० ॥ कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कारम् । पूज्यतमाय भगवते वीराय विलीनमोहाय ॥ २१ ॥ तत्त्वार्थाधिगमाख्यं बह्वर्थं संग्रहं लघुग्रन्थम् । वक्ष्यामि शिष्यहितमिममर्हद्वचनैकदेशस्य ॥ २२ ॥ महतोऽतिमहाविषयस्य दुर्गमग्रन्थभाष्यपारस्य । कः शक्तः प्रत्यासं जिनवचनमहोदधेः कर्तुम् ॥ २३ ॥ शिरसा गिरिं बिभित्सेदुच्चिक्षिप्सेच्च स क्षितिं दोर्भ्याम् । प्रतितीर्षेच्च समुद्रं मित्सेच्च पुनः कुशाग्रेण ॥२४॥ व्योम्नीन्दुं चिक्रमिषेन्मेरुगिरिं पाणिना चिकम्पयिषेत् । गत्यानिलं जिगीषेच्चरमसमुद्रं पिपासेच्च ॥२५॥ खद्योतकप्रभाभिः सोऽभिबुभूषेच्च भास्करं मोहात् । योऽतिमहाग्रन्थार्थं जिनवचनं संजिघृक्षेत ॥ २६ ॥ एकमपि तु जिनवचनाद्यस्मान्निर्वाहकं पदं भवति । श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥२७॥ तस्मात्तत्प्रामाण्यात् समासतो व्यासतश्च जिनवचनम् । श्रेय इति निर्विचारं ग्राह्यं धार्यं च वाच्यं च ॥२८॥ न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ २९ ॥ श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम् । आत्मानं च परं च हि हितोपदेष्टानुगृह्णाति ॥ ३० ॥ नर्ते च मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन् । तस्मात्परमिममेवेति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१ ॥ इति सम्बन्धकारिका ।

---

## श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहः

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥ जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥ प्रमाणनयैरधिगमः ॥ ६ ॥ निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥ सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ ८ ॥ मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ ९ ॥ तत्प्रमाणे ॥ १० ॥ आद्ये परोक्षम् ॥ ११ ॥ प्रत्यक्षमन्यत् ॥ १२ ॥ मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ॥ १३ ॥ तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥ अवग्रहेहापायधारणाः ॥ १५ ॥ बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवाणां सेतराणाम् ॥ १६ ॥ अर्थस्य ॥ १७ ॥ व्यञ्जनस्यावग्रहः ॥ १८ ॥ न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥ श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥

द्विविधोऽवधिः ॥ २१ ॥ भवप्रत्ययो नारकदेवानाम् ॥ २२ ॥ यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ २३ ॥ ऋजुविपुलमती मनःपर्यायः ॥ २४ ॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २५ ॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः ॥ २६ ॥ मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ २७ ॥ रूपिष्ववधेः ॥ २८ ॥ तदनन्तभागे मनःपर्यायस्य ॥ २९ ॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥ ३० ॥ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३१ ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३२ ॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३३ ॥ नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥ आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे प्रथमोऽध्यायः



औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥ द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥२॥ सम्यक्त्वचारित्रे ॥ ३ ॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥ ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥ गतिकषायलिंगमिथ्यादर्शनासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥ जीवभव्याभव्यत्वादीनि च ॥ ७ ॥ उपयोगो लक्षणम् ॥ ८ ॥ स द्विविधोऽष्टचतुर्भेदः ॥ ९ ॥ संसारिणो मुक्ताश्च ॥ १० ॥ समनस्कामनस्काः ॥ ११ ॥ संसारिणस्त्रसस्थावराः ॥ १२ ॥ पृथिव्यम्बुवनस्पतयः स्थावराः ॥ १३ ॥ तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥ १४ ॥ पञ्चेन्द्रियाणि ॥ १५ ॥ द्विविधानि ॥ १६ ॥ निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥ लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८ ॥ उपयोगः स्पर्शादिषु ॥ १९ ॥ स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ २० ॥ स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥ श्रुतमनिन्द्रियस्य ॥ २२ ॥ वाय्वन्तानामेकम् ॥ २३ ॥ कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २४ ॥ संज्ञिनः समनस्काः ॥ २५ ॥ विग्रहगतौ कर्मयोगः ॥ २६ ॥ अनुश्रेणि गतिः ॥ २७ ॥ अविग्रहा जीवस्य ॥ २८ ॥ विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥ २९ ॥ एकसमयोऽविग्रहः ॥ ३० ॥ एकं द्वौ वानाहारकः ॥ ३१ ॥ सम्मूर्छनगर्भोपपाता जन्म ॥ ३२ ॥ सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३३ ॥ जराय्वण्डपोतजानां गर्भः ॥३४॥

नारकदेवानामुपपात ॥ ३५ ॥ शेषाणा समूर्छनम् ॥ ३६ ॥ औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥ ३७ ॥ तेषा पर पर सूक्ष्मम् ॥ ३८ ॥ प्रदेशतोऽसख्येयगुण प्राक् तैजसात् ॥ ३९ ॥ अनन्तगुणे परे ॥ ४० ॥ अप्रतिघाते ॥ ४१ ॥ अनादिसबन्धे च ॥ ४२ ॥ सर्वस्य ॥४३॥ तदादीनि भाज्यानि युगपदेकस्या चतुर्भ्य ॥ ४४ ॥ निरुपभोगमन्त्यम् ॥ ४५ ॥ गर्भसमूर्छनजमाद्यम् ॥ ४६ ॥ वैक्रियमौपपातिकम् ॥ ४७ ॥ लब्धिप्रत्यय च ॥ ४८ ॥ शुभ विशुद्धमव्याघाति चाहारक चतुर्दशपूर्वधरस्यैव ॥ ४९ ॥ नारकसम्मूर्छिनो नपुसकानि ॥ ५० ॥ न देवा ॥५१॥ औपपातिकचरमदेहोत्तमपुरुषासख्येयवर्षायुषोऽनपवर्त्यायुष ॥ ५२ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे द्वितीयोऽध्याय



रत्नशर्करावालुकापङ्कधूमतमोमहातम प्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठा सप्ताधोऽध पृथुतरा ॥ १ ॥ तासु नरका ॥ २ ॥ नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रिया ॥ ३ ॥ परस्परोदीरितदु खा ॥ ४ ॥ सक्लिष्टासुरोदीरितदु खाश्च प्राक् चतुर्थ्या ॥ ५ ॥ तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वाना परा स्थिति ॥ ६ ॥ जम्बूद्वीपलवणादय शुभनामानो द्वीपसमुद्रा ॥ ७ ॥ द्विर्द्विर्विष्कम्भा पूर्वपूर्वपरिक्षेपिणो वलयाकृतय ॥ ८ ॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीप ॥ ९ ॥ तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षा क्षेत्राणि ॥ १० ॥ तद्विभाजिन पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वता ॥ ११ ॥ द्विर्धातकीखण्डे ॥१२॥ पुष्करार्धे च ॥ १३ ॥ प्राग्मानुषोत्तरान्मनुष्या ॥ १४ ॥ आर्या म्लिशश्च ॥ १५ ॥ भरतैरावतविदेहा कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्य ॥ १६ ॥ नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥ १७ ॥ तिर्यग्योनीना च ॥ १८ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे तृतीयोऽध्याय



देवाश्चतुर्निकाया ॥१॥ तृतीय पीतलेश्य ॥२॥ दशाष्टपञ्चद्वादशविकल्पा कल्पोपपन्नपर्यन्ता ॥३॥ इन्द्रसामानिकत्रायस्त्रिंशपारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकश ॥४॥ त्रायस्त्रिंशलोकपाल-

लवर्ज्या व्यन्तरज्योतिष्का ॥ ५ ॥ पूर्वयोर्द्वीन्द्रा ॥ ६ ॥ पीतान्तलेश्या ॥ ७ ॥ कायप्रवीचारा आ ऐशानात् ॥ ८ ॥ शेषा स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयो ॥ ९ ॥ परेऽप्रवीचारा ॥१०॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ ११ ॥ व्यन्तरा किन्नरकिम्पुरुषमहोरगगान्धर्वयक्षराक्षसभूतपिशाचा ॥१२॥ ज्योतिष्का सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च ॥ १३ ॥ मेरुप्रदक्षिणानित्यगतयो नृलोके ॥ १४ ॥ तत्कृत कालविभाग ॥ १५ ॥ बहिरवस्थिता ॥१६॥ वैमानिका ॥ १७ ॥ कल्पोपपन्ना कल्पातीताश्च ॥ १८ ॥ उपर्युपरि ॥ १९ ॥ सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धे च ॥ २० ॥ स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिका ॥२१॥ गतिशरीरपरिग्रहाभिमानतो हीना ॥२२॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २३ ॥ प्राग्ग्रैवेयकेभ्य कल्पा ॥ २४ ॥ ब्रह्मलोकालया लोकान्तिका ॥ २५ ॥ सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुत (अरिष्टाश्च) ॥२६॥ विजयादिषु द्विचरमा ॥२७॥ औपपातिकमनुष्येभ्य शेषास्तिर्यग्योनयः ॥ २८ ॥ स्थिति ॥ २९ ॥ भवनेषु दक्षिणार्धाधिपतीना पल्योपममध्यर्धम् ॥ ३० ॥ शेषाणा पादोने ॥ ३१ ॥ असुरेन्द्रयो सागरोपममधिक च ॥ ३२ ॥ सौधर्मादिषु यथाक्रमम् ॥ ३३ ॥ सागरोपमे ॥ ३४ ॥ अधिके च ॥ ३५ ॥ सप्त सानत्कुमारे ॥ ३६ ॥ विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥३७॥ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ॥ ३८ ॥ अपरा पल्योपममधिक च ॥ ३९ ॥ सागरोपमे ॥ ४० ॥ अधिके च ॥ ४१ ॥ परत परत पूर्वा पूर्वानन्तरा ॥ ४२ ॥ नारकाणा च द्वितीयादिषु ॥ ४३ ॥ दशवर्षसहस्राणि प्रथमायाम् ॥४४॥ भवनेषु च ॥ ४५ ॥ व्यन्तराणा च ॥ ४६ ॥ परा पल्योपमम् ॥४७॥ ज्योतिष्काणामधिकम् ॥ ४८ ॥ ग्रहाणामेकम् ॥ ४९ ॥ नक्षत्राणामर्धम् ॥ ५० ॥ तारकाणा चतुर्भाग ॥ ५१ ॥ जघन्या त्वष्टभाग ॥ ५२ ॥ चतुर्भाग शेषाणाम् ॥ ५३ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे चतुर्थोऽध्याय

अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥ द्रव्याणि जीवाश्च ॥ २ ॥ नित्यावस्थितान्यरूपाणि ॥ ३ ॥ रूपिणः पुद्गलाः ॥४॥ आऽऽकाशादेकद्रव्याणि ॥ ५ ॥ निष्क्रियाणि च ॥ ६ ॥ असङ्ख्येयाः प्रदेशा धर्माधर्मयोः ॥ ७ ॥ जीवस्य च ॥ ८ ॥ आकाशस्यानन्ताः ॥ ९ ॥ सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥ नाणोः ॥ ११ ॥ लोकाकाशेऽवगाहः ॥ १२ ॥ धर्माधर्मयोः कृत्स्ने ॥ १३ ॥ एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥ असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥ प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ १६ ॥ गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः ॥ १७ ॥ आकाशस्यावगाहः ॥१८॥ शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥ सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥ परस्परोपग्रहो जीवानाम् ॥ २१ ॥ वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥ २२ ॥ स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥ शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च ॥२४॥ अणवः स्कन्धाश्च ॥ २५ ॥ सङ्घातभेदेभ्य उत्पद्यन्ते ॥२६॥ भेदादणुः ॥ २७ ॥ भेदसङ्घाताभ्यां चाक्षुषाः ॥ २८ ॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥ २९ ॥ तद्भावाव्ययं नित्यम् ॥ ३० ॥ अर्पितानर्पितसिद्धेः ॥ ३१ ॥ स्निग्धरूक्षत्वाद् बन्धः ॥ ३२ ॥ न जघन्यगुणानाम् ॥ ३३ ॥ गुणसाम्ये सदृशानाम् ॥ ३४ ॥ द्व्यधिकादिगुणानां तु ॥ ३५ ॥ बन्धे समाधिकौ पारिणामिकौ ॥३६॥ गुणपर्यायवद् द्रव्यम् ॥ ३७ ॥ कालश्चेत्येके ॥ ३८ ॥ सोऽनन्तसमयः ॥ ३९ ॥ द्रव्याश्रया निर्गुणा गुणाः ॥ ४० ॥ तद्भावः परिणामः ॥ ४१ ॥ अनादिरादिमांश्च ॥ ४२ ॥ रूपिष्वादिमान् ॥ ४३ ॥ योगोपयोगौ जीवेषु ॥ ४४ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे पञ्चमोऽध्यायः

---

कायवाङ्मनःकर्म योगः ॥ १ ॥ स आस्रवः ॥ २ ॥ शुभः पुण्यस्य ॥ ३ ॥ अशुभः पापस्य ॥ ४ ॥ सकषायाकषाययोः साम्परायिकेर्यापथयोः ॥ ५ ॥ अव्रतकषायेन्द्रियक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसङ्ख्याः पूर्वस्य भेदाः ॥ ६ ॥ तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः ॥ ७ ॥ अधिकरणं जीवाजीवाः ॥ ८ ॥ आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ९ ॥ निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ १० ॥ तत्प्रदोषनिह्नवमात्सर्या-

न्तरायासादनोपघाता ज्ञानदर्शनावरणयो ॥ ११ ॥ दु खशोकतापाक्रन्दनवधपरिदेवना यात्मपरोभयस्था यसद्वेद्यस्य ॥ १२ ॥ भूतव्रत्यनुकम्पा दान सरागसयमादि योग क्षान्ति शौचमिति सद्वेद्यस्य ॥ १३ ॥ केवलिश्रुतसघधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १४ ॥ कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ १५ ॥ बह्वारम्भपरिग्रहत्व च नारकस्यायुष ॥ १६ ॥ माया तैर्यग्योनस्य ॥ १७ ॥ अल्पारम्भपरिग्रहत्व स्वभावमार्दवार्जव च मानुषस्य ॥ १८ ॥ नि शीलव्रतत्व च सर्वेषाम् ॥ १९ ॥ सरागसयमसयमासयमाकामनिर्जराबालतपासि दैवस्य ॥ २० ॥ योगवक्रता विसवादन चाशुभस्य नाम्न ॥ २१ ॥ विपरीत शुभस्य ॥ २२ ॥ दर्शनविशुद्धिर्विनयसपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्ण ज्ञानोपयोगसवेगौ शक्तितस्त्यागतपसी सघसाधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य॥२३॥ परात्मनिन्दाप्रशसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २४ ॥ तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २५ ॥ विघ्नकरणमन्तरायस्य ॥२६॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे षष्ठोऽध्याय



हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥ देशसर्वतोऽणुमहती ॥ २ ॥ तत्स्थैर्यार्थं भावना पञ्च पञ्च ॥३॥ हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ४ ॥ दु खमेव वा ॥ ५ ॥ मैत्रीप्रमोदकारुण्यमाध्यस्थानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥ ६ ॥ जगत्कायस्वभावौ च सवेगवैराग्यार्थम् ॥ ७ ॥ प्रमत्तयोगात्प्राणव्यपरोपण हिंसा ॥ ८ ॥ असदभिधानमनृतम् ॥ ९ ॥ अदत्तादान स्तेयम् ॥ १० ॥ मैथुनमब्रह्म ॥ ११ ॥ मूर्छा परिग्रह ॥ १२ ॥ नि शल्यो व्रती ॥ १३ ॥ अगार्यनगारश्च ॥ १४ ॥ अणुव्रतोऽगारी ॥ १५ ॥ दिग्देशानर्थदडविरतिसामायिकपौषधोपवासोपभोगपरिभोगातिथिसविभागव्रतसपन्नश्च ॥ १६ ॥ मारणान्तिकीं सलेखना जोषिता ॥ १७ ॥ शकाकाक्षाविचिकित्सान्यदृष्टिप्रशसासस्तवा सम्यग्दृष्टेरतीचारा ॥ १८ ॥ व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥१९॥ ब धवधच्छविच्छेदातिभारारोपणान्नपाननिरोधा ॥२०॥ मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदा ॥२१॥ स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्य-

पदारा ॥ २२ ॥ परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडा-तीव्रकामाभिनिवेशा ॥ २३ ॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदास-कुप्यप्रमाणातिक्रमा ॥ २४ ॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धा-नानि ॥ २५ ॥ आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपा ॥ २६ ॥ कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ २७ ॥ योग-दुष्प्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ २८ ॥ अप्रत्यवेक्षिताप्रमार्जितो-त्सर्गादाननिक्षेपसंस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥ २९ ॥ स-चित्तसंबद्धसंमिश्राभिषवदुष्पक्वाहारा ॥ ३० ॥ सचित्तनिक्षेपपिधानपर-व्यपदेशमात्सर्यकालातिक्रमा ॥ ३१ ॥ जीवितमरणाशंसामित्रानुरागसु-खानुबन्धनिदानकरणानि ॥३२॥ अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥३३॥ विधिद्रव्यदातृपात्रविशेषात्तद्विशेष ॥ ३४ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे सप्तमोऽध्याय



मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतव ॥ १ ॥ सकषायत्वा-ज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते ॥ २ ॥ स बन्ध ॥ ३ ॥ प्रकृति-स्थित्यनुभावप्रदेशास्तद्विधय ॥ ४ ॥ आद्यो ज्ञानदर्शनावरणवेदनीयमोह-नीयायुष्कनामगोत्रान्तराया ॥ ५ ॥ पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंश-द्द्विपञ्चभेदा यथाक्रमम् ॥ ६ ॥ मत्यादीनाम् ॥ ७ ॥ चक्षुरचक्षुरवधि-केवलाना निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥८॥ सदसद्वेद्ये ॥ ९ ॥ दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्वि-षोडशनवभेदा सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनन्तानु-बन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकश क्रोधमानमाया-लोभा हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा ॥ १० ॥ नारकतैर्य-ग्योनमानुषदैवानि ॥ ११ ॥ गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसंघातसं-स्थानसंहननस्पर्शरसगन्धवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वास-विहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥ १२ ॥ उच्चैर्नीचैश्च ॥१३॥ दानादीनाम् ॥१४॥ आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्य परा स्थिति ॥ १५ ॥ सप्ततिर्मोहनीयस्य ॥ १६ ॥ नामगोत्रयोर्विंशति ॥ १७ ॥ त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य ॥ १८ ॥ अपरा द्वादश मुहूर्ता

यस्य ॥ १९ ॥ नामगोत्रयोरष्टौ ॥ २० ॥ शेषाणामन्तर्मुहूर्त्तम् ॥ २१ ॥ विपाकोऽनुभावः ॥२२॥ स यथानाम ॥ २३ ॥ ततश्च निर्जरा ॥ २४॥ नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः ॥ २५ ॥ सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥ २६ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे अष्टमोऽध्यायः

---

आस्रवनिरोधः संवरः ॥ १ ॥ स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥२॥ तपसा निर्जरा च ॥३॥ सम्यग्योगनिग्रहो गुप्तिः ॥४॥ ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥५॥ उत्तमः क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥६॥ अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः ॥७॥ मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥८॥ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥ सूक्ष्मसंपरायच्छद्मस्थवीतरागयोश्चतुर्दश ॥१०॥ एकादश जिने ॥११॥ बादरसंपराये सर्वे ॥१२॥ ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥ दर्शनमोहान्तराययोरदर्शनालाभौ॥१४॥ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥१५॥ वेदनीये शेषाः ॥१६॥ एकादयो भाज्या युगपदेकोनविंशतेः ॥१७॥ सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् ॥ १८ ॥ अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥ प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥ नवचतुर्दशपञ्चद्विभेदं यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनानि ॥ २२ ॥ ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥ आचार्योपाध्यायतपस्विशैक्षकग्लानगणकुलसंघसाधुसमनोज्ञानाम् ॥ २४ ॥ वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥ २५ ॥ बाह्याभ्यन्तरोपध्योः ॥ २६ ॥ उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ २७ ॥ आ मुहूर्तात् ॥ २८ ॥ आर्तरौद्रधर्मशुक्लानि ॥ २९ ॥ परे मोक्षहेतू ॥ ३० ॥ आर्तममनोज्ञानां संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३१ ॥ वेदनायाश्च ॥ ३२ ॥

विपरीत मनोज्ञानाम् ॥ ३३ ॥ निदान च ॥ ३४ ॥ तदविरतदेशविरतप्रमत्तसयतानाम् ॥ ३५ ॥ हिंसानृतस्तेयविपयसरक्षणेभ्यो रौद्रमविरतदेशविरतयो ॥ ३६ ॥ आज्ञापायविपाकसस्थानविचयाय धर्ममप्रमत्तसयतस्य ॥ ३७ ॥ उपशान्तक्षीणकपाययोश्च ॥ ३८ ॥ शुक्ले चाद्ये ॥ ३९ ॥ परे केवलिन ॥ ४० ॥ पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृत्तीनि ॥ ४१ ॥ तत् त्र्येककाययोगायोगानाम् ॥४२॥ एकाश्रये सवितर्के पूर्वे ॥ ४३ ॥ अविचार द्वितीयम् ॥४४॥ वितर्क श्रुतम ॥ ४५ ॥ विचारोऽर्थव्यञ्जनयोगसक्रान्ति ॥ ४६ ॥ सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशा तमोहक्षपकक्षीणमोहजिना क्रमशोऽसख्येयगुणनिर्जरा ॥४७॥ पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्था ॥४८॥ सयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपातविकल्पत साध्या ॥ ४९ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रव नसङ्ग्रहे नवमोऽध्याय



मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥१॥ बन्धहेत्वभाव निर्जराभ्याम् ॥ २ ॥ कृत्स्नकर्मक्षयो मोक्ष ॥३॥ औपशमिकादि भव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञा दर्शनसिद्धत्वेभ्य ॥ ४ ॥ तदन तरमूर्द्ध्वं गच्छत्यालोकान्तात् ॥५॥ पूर्वप्रयोगादसङ्गत्वाद्बन्धविच्छेदात्तथागति परिणामाच्च तद्गति ॥ ६ ॥ क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसख्याल्पबहुत्वत साध्या ॥ ७ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे दशमोऽध्याय



एव तत्त्वपरिज्ञानाद्विरक्तस्यात्मनो भृशम् । निरास्रवत्वाच्छिन्नाया नवाया कर्मसन्ततौ ॥ १ ॥ पूर्वार्जित क्षपयतो यथोक्तै क्षयहेतुभि । ससारबीज कात्स्न्येन मोहनीय प्रहीयते ॥ २ ॥ ततोऽन्तरायज्ञानघ्नदर्शनघ्ना यन तरम् । प्रहीयन्तेऽस्य युगपत् त्रीणि कर्माण्यशेपत ॥ ३ ॥ गर्भसूच्या विनष्टाया यथा तालो विनश्यति । तथा कर्म क्षय याति मोहनीये क्षय गते ॥ ४ ॥ तत क्षीणचतु कर्मा प्राप्तोऽथाख्यातसयमम् । बीजबन्धननिर्मुक्त स्नातक परमेश्वर ॥ ५ ॥ शेपकर्मफलापेक्ष शुद्धो बुद्धो निरामय । सर्वज्ञ सर्वदर्शी च जिनो भवति केवली ॥ ६ ॥ कृत्स्नकर्मक्षयादूर्ध्वं निर्वाणमधिगच्छति । यथा दग्धेन्धनो वह्निर्निरुपादानसन्ततिः ॥ ७ ॥ दग्धे बीजे यथा

ऽत्यन्त प्रादुर्भवति नाङ्कुर । कर्मबीजे तथा दग्धे नारोहति भवाङ्कुर ॥ ८ ॥ तदनन्तरमेवोर्ध्वमालोकान्तात्स गच्छति । पूर्वप्रयोगासङ्गत्वबन्धच्छेदोर्ध्वगौरवै ॥ ९ ॥ कुलालचक्रे दोलायामिषौ चापि यथेष्यते । पूर्वप्रयोगात्कर्मेह तथा सिद्धिगति स्मृता ॥ १० ॥ मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुन । कर्मसङ्गविनिर्मोक्षात्तथा सिद्धिगति स्मृता ॥ ११ ॥ एरण्डयन्त्रपेटासु बन्धच्छेदाद्यथा गति । कर्मबन्धनविच्छेदात्सिद्धस्यापि तथेष्यते ॥ १२ ॥ ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमै । अधोगौरवधर्माण पुद्गला इति चोदितम् ॥ १३ ॥ यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्निवीतय । स्वभावत प्रवर्तन्ते तथोर्ध्वं गतिरात्मनाम् ॥ १४ ॥ अतस्तु गतिवैकृत्यमेषा यदुपलभ्यते । कर्मण प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥ १५ ॥ अधस्तिर्यगथोर्ध्वं च जीवाना कर्मजा गति । ऊर्ध्वमेव तु तद्धर्मा भवति क्षीणकर्मणाम् ॥१६॥ द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारम्भवीतय । सम तथैव सिद्धस्य गतिमोक्षभवक्षया ॥ १७ ॥ उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह । युगपद्भवतो यद्वत् तथा निर्वाणकर्मणो ॥ १८ ॥ तन्वी मनोज्ञा सुरभि पुण्या परमभास्वरा । प्राग्भारा नाम वसुधा लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥ नृलोकतुल्यविष्कम्भा सितच्छत्रनिभा शुभा । ऊर्ध्वं तस्या क्षिते सिद्धा लोकान्ते समवस्थिता ॥२०॥ तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शने । सम्यक्त्वसिद्धतावस्था हेत्वभावाच्च निष्क्रिया ॥ २१ ॥ ततोऽप्यूर्ध्वं गतिस्तेषा कस्मान्नास्तीति चेन्मति । धर्मास्तिकायस्याभावात्स हि हेतुर्गते पर ॥ २२ ॥ ससारविषयातीत मुक्तानामव्यय सुखम् । अव्याबाधमिति प्रोक्त परम परमर्षिभि ॥२३॥ स्यादेतदशरीरस्य जन्तोर्नष्टाष्टकर्मण । कथ भवति मुक्तस्य सुखमित्यत्र मे शृणु ॥ २४ ॥ लोके चतुर्ष्विहार्थेषु सुखशब्द प्रयुज्यते । विषये वेदनाऽभावे विपाके मोक्ष एव च ॥ २५ ॥ सुखो वह्नि सुखो वायुर्विषयेष्विह कथ्यते । दु खाऽभावे च पुरुष सुखितोऽस्मीति मन्यते ॥ २६ ॥ पुण्यकर्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम् । कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तमम् ॥ २७ ॥ सुखप्रसुप्तवत्केचिदिच्छन्ति परिनिर्वृतिम् । तदयुक्त क्रियावत्त्वात्सुखानुशयतस्तथा ॥ २८ ॥ श्रमक्लमदव्याधिमदनेभ्यश्च सम्भवात् । मोहोत्पत्तेर्विपाकाच्च दर्शनघ्नस्य कर्मण ॥ २९ ॥ लोके तत्सदृशो ह्यर्थ कृत्स्नेऽप्यन्यो न विद्यते । उपमीयेत तद्येन तस्मान्निरुपम सुखम्

॥ ३० ॥ लिङ्गप्रसिद्धेः प्रामाण्यादनुमानोपमानयोः । अत्यन्त चाप्रसिद्धं तद्यत्तेनानुपमं स्मृतम् ॥ ३१ ॥ प्रत्यक्षं तद्भगवतामर्हतां तैश्च भाषितम् । गृह्यतेऽस्तीत्यतः प्राज्ञैर्न च्छद्मस्थपरीक्षया ॥ ३२ ॥ इति ॥ ॥

यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसंपन्नो भिक्षुर्मोक्षाय घटमानः काल-संहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ एवोपरमति, स सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमस्मिन्दे-वतयोपपद्यते । तत्र सुकृतकर्मफलमनुभूय स्थितिक्षयात्प्रच्युतो देशजाति-कुलशीलविद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिम-वाप्य पुनः सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायु-क्तेन कुशलाभ्यासानुबन्धक्रमेण परं त्रिर्जनित्वा सिद्ध्यतीति ॥ ॥

वाचकमुख्यस्य शिवश्रियः प्रकाशयशसः प्रशिष्येण । शिष्येण घोष-नन्दिक्षमणस्यैकादशाङ्गविदः ॥ १ ॥ वाचनया च महावाचकक्षमणमु-ण्डपादशिष्यस्य । शिष्येण वाचकाचार्यमूलनाम्नः प्रथितकीर्तेः ॥ २ ॥ न्य-ग्रोधिकाप्रसूतेन विहरता पुरवरे कुसुमनाम्नि । कौभीषणिना स्वातितनयेन वात्सीसुतेनार्घ्यम् ॥ ३ ॥ अर्हद्वचनं सम्यग्गुरुक्रमेणागतं समुपधार्य । दुःखार्तं च दुरागमविहतमतिं लोकमवलोक्य ॥ ४ ॥ इदमुच्चैर्नागरवाच-केन सत्त्वानुकम्पया दृब्धम् । तत्त्वार्थाधिगमाख्यं स्पष्टमुमास्वातिना शा-स्त्रम् ॥ ५ ॥ यस्तत्त्वाधिगमाख्यं ज्ञास्यति च करिष्यति च तत्रोक्तम् । सो-ऽव्याबाधसुखाख्यं प्राप्स्यत्यचिरेण परमार्थम् ॥६॥ इति भाष्यप्रशस्तिः ॥

---

## सहस्रावधानिश्रीमुनिसुन्दरसूरिविरचितोऽध्यात्मकल्पद्रुमः ।

जयश्रीरान्तरारीणां, लेभे येन प्रशान्तितः । तं श्रीवीरजिनं नत्वा, रसः शान्तो विभाव्यते ॥ १ ॥ सर्वमङ्गलनिधौ हृदि यस्मिन्, सङ्गते निरुपमं सुखमेति । मुक्तिशर्म च वशीभवति द्राक्, तं बुधा भजत शान्तरसेन्द्रम् ॥२॥ समतैकलीनचित्तो, ललनापत्यस्वदेहममतामुक् । विषयकषायाद्यवशः शा-स्त्रगुणैर्दमितचेतस्कः ॥ ३ ॥ वैराग्यशुद्धधर्मा देवादिसतत्त्वविद्विरतिधारी । संवरवान् शुभवृत्तिः साम्यरहस्यं भज शिवार्थिन् ॥ ४ ॥ युग्मम् ॥

### अथ प्रथमः समताधिकारः

चित्तबालक मा त्याक्षीरजस्रं भावनौषधीः । यत्त्वां दुर्ध्यानभूता न छलयन्ति छलान्विषः ॥ ५ ॥ यदिन्द्रियार्थैः सकलैः सुखं स्यान्नरेन्द्रचक्रित्रि-

दशाधिपानाम् । तदूनिंदवलेव पुरो हि साम्य-सुधाबुधेमेन तमाद्रियस्व ॥ ६ ॥ अदृष्टवैचित्र्यवशाज्जगज्जने, विचित्रकर्माशयवाग्विसरथुले । उदासवृत्तिस्थितचित्तवृत्तय , सुख श्रयते यतय क्षतार्तय ॥ ७ ॥ विश्वजन्तुपु यदि क्षणमेक, साम्यतो भजसि मानस मैत्रीम् । तत्सुख परममत्र परत्राप्यश्नुपे न यदभूत्तव जातु ॥ ८ ॥ न यस्य मित्र न च कोऽपि शत्रुर्निज परो वापि न कश्चनास्ते । न चेंद्रियार्थेपु रमेत चेत , कषायमुक्त परम स योगी ॥ ९ ॥ भजस्व मैत्रीं जगदङ्गिराशिपु, प्रमोदमात्मन् गुणिपु त्वशेपत । भवार्तिदीनेपु कृपारस सदाप्युदासवृत्तिं खलु निर्गुणेष्वपि ॥ १० ॥ मैत्री परस्मिन् हितधी समग्रे, भवेत्प्रमोदो गुणपक्षपात । कृपा भवार्त्ते प्रतिकर्तुमीहोपेक्षैव माध्यस्थ्यमवार्यदोपे ॥ ११ ॥ परहितचिंता मैत्री परदु खविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता, परदोपोपेक्षणमुपेक्षा ॥ १२ ॥ मा कार्षीत्कोऽपि पापानि, मा चाभूत्कोऽपि दु खित । मुच्यता जगद् येपा, मतिर्मैत्री निगद्यते ॥ १३ ॥ अपास्ताशेपदोपाणा, वस्तुतत्त्वावलोकिनाम् । गुणेपु पक्षपातो य , स प्रमोद प्रकीर्तित ॥१४॥ दीनेष्वार्तेपु भीतेपु, याचमानेपु जीवितम् । प्रतीकारपरा बुद्धि , कारुण्यमभिधीयते॥ १५ ॥ क्रूरकर्मसु नि शङ्क, देवतागुरुनिंदिपु । आत्मशंसिपु योपेक्षा, तन्माध्यस्थ्यमुदीरितम् ॥ १६ ॥ चेतनेतरगतेष्वखिलेपु, स्पर्शरूपरवगधरसेपु । साम्यमेष्यति यदा तव चेत , पाणिग शिवसुख हि तदात्मन् ॥ १७ ॥ के गुणास्तव यत स्तुतिमिच्छस्यद्भुत किमकृथा मदवान् यत् । कैर्गता नरकभी सुकृतैस्ते, किं जित पितृपतिर्यदचिन्त ॥१८॥ गुणस्तवैर्यो गुणिना परेपामाक्रोशनिंदादिभिरात्मनश्च । मन सम शीलति मोदते वा, खिद्येत च व्यत्ययत स वेत्ता ॥ १९ ॥ न वेत्सि शत्रून् सुहृदश्च नैव, हिताहिते स्व न पर च जंतो । दु ख द्विपन् वाञ्छसि शर्म चैतन्निदानमूढ कथमाप्स्यसीष्टम् ॥ २० ॥ कृती हि सर्वं परिणामरम्य, विचार्य गृह्णाति चिरस्थितीह । भवान्तरेऽनन्तसुखाप्तये तद् आत्मन् किमाचारमिम जहासि ॥ २१ ॥ निज परो वेति कृतो विभागो, रागादिभिस्ते त्वरयस्त्वात्मन् । चतुर्गतिक्लेशविधानतस्तत् प्रमाणयन्नस्यरिनिर्मित किम् ॥ २२ ॥ अनादिरात्मा न निज परो वा, कस्यापि कश्चिन्न रिपु सुहृद्वा । स्थिरा न देहाकृतयोऽणवश्च, तथापि साम्य किमुपैपि नैपु ॥ २३ ॥ यथा विदा लेप्यमया न तत्त्वात्, सुखाय मातापितृपुत्रदारा । तथा परेऽपीह

विशीर्णतत्तदाकारमेतद्धि सम समग्रम ॥ २४ ॥ जानन्ति कामानिखिला ससज्ञा, अर्थं नरा केऽपि च केऽपि धमम् । जैन च केचिद् गुरुदेवशुद्ध, केचित् शिव केऽपि च केऽपि साम्यम् ॥ २५ ॥ स्निह्यन्ति तावद्धि निना निजेषु, पश्यन्ति यावन्निजमथमेभ्य । इमा भवेऽत्रापि समीक्ष्य रीतिं, स्वार्थे न क प्रेत्य हिते यतेत ॥ २६ ॥ स्वप्नेन्द्रजालादिषु यद्वदाप्तै रोपश्च तोपश्च मुधा पदार्थै । तथा भवेऽस्मिन् विपयै समस्तैरेव विभाव्यात्मलयेऽवधेहि ॥ २७ ॥ एप मे जनयिता जननीय, बधव पुनरिमे स्वजनाश्च । द्रव्यमेतदिति जातममत्वो, नैव पश्यसि कृतातवशत्वम् ॥२८॥ नो धनै परिजनै स्वजनैर्वा दैवतै परिचितैरपि मत्रै । रक्ष्यतेऽत्र खलु कोऽपि कृतातान्नो विभावयसि मूढ किमेवम् ॥२९॥ तैर्भवेऽपि यदहो सुखमिच्छसस्य साधनतया प्रतिभाते । मुह्यसि प्रतिकल विपयेषु, प्रीतिमेपि न तु साम्यसतत्त्वे ॥३०॥ अथतोयुग्मम् ॥ किं कपायकलुप कुरुपे स्व, केषु चिन्ननु मनोऽरिधियात्मन् । तेऽपि ते हि जनकादिकरूपैरिष्टता दधुरनतभवेषु ॥३१॥ याश्च शोचसि गता किमिमे मे, स्नेहला इति धिया विधुरात्मा । तैर्भवेपु निहतस्त्वमनतेष्वेव, तेऽपि निहता भवता च ॥३२॥ त्रातु न शक्या भवदुखतो ये, त्वया न ये त्वामपि पातुमीशा । ममत्वमेतेषु दध मुधात्मन्, पदे पदे किं शुचमेपि मूढ ॥ ३३ ॥ सचेतना पुद्गलपिंडजीवा, अर्था परे चाणुमया द्वयेऽपि । दधत्यनतान् परिणामभावास्तेपु कस्त्वर्हति रागरोपौ ॥ ३४ ॥

---

## अथ द्वितीय स्त्रीममत्वमोचनाधिकार

मुह्यसि प्रणयचारुगिरासु, प्रीतित प्रणयिनीपु कृतिंस्त्वम् । किं न वेत्सि पतता भववार्द्धौ, ता नृणा खलु शिला गलबद्धा ॥ १ ॥ चर्मास्थिमज्जान्त्रवसास्रमासामेध्याद्यशुच्यस्थिरपुद्गलानाम् । स्त्रीदेहपिंडाकृतिसस्थितेषु, स्कंधेपु किं पश्यसि रम्यमात्मन् ॥ २ ॥ विलोक्य दूरस्थममेध्यमल्प, जुगुप्ससे मोटितनासिकस्त्वम् । भृतेषु तेनैव विमूढ योपावपु पु तत्कि कुरुपेऽभिलापम् ॥ ३ ॥ अमेध्यमासास्रवसात्मकानि, नारीशरीराणि निपेवमाणा । इहाप्यपत्यद्रविणादिचिंतातापान् परत्र प्रति दुर्गतीश्च ॥ ४ ॥ अङ्गेषु येषु परिमुह्यसि कामिनीना, चेत प्रसीद विश च क्षणमतरेपाम् । सम्यक् समीक्ष्य निरमाशुचिपिंडकेभ्यस्तेभ्यश्च शुच्यशुचिवस्तुविचारमिच्छन्

॥ ५ ॥ विमुह्यसि स्मेरदृशः सुमुख्या, मुखेक्षणादीन्यभिवीक्षमाण । समीक्षसे नो नरकेषु तेषु मोहोद्भवा भाविकदर्थनास्ता ॥ ६ ॥ अमेध्यभस्त्रा बहुरन्ध्रनिर्यन्मलाविलोद्यत्कृमिजालकीर्णा । चापल्यमायानृतवञ्चिका स्त्री, संस्कारमोहान्नरकाय भुक्ता ॥ ७ ॥ निर्भूमिर्विषकन्दली गतदरी व्याघ्री निराह्वो महाव्याधिर्मृत्युरकारणश्च ललनाऽनभ्रा च वज्राशनिः । बन्धुस्नेहविघातसाहसमृषावादादिसंतापभूः, प्रत्यक्षापि च राक्षसीति बिरुदैः त्या ताऽऽगमे त्यज्यताम् ॥ ८ ॥



## अथ तृतीयोऽपत्यममत्वमोचनाधिकारः

मा भूरपत्यान्यवलोकमानो, मुदाकुलो मोहनृपारिणा यत् । चिक्षिप्सया नारकचारकेऽसि, दृढं निबद्धो निगडैरमीभिः ॥ १ ॥ आजीवितं जीव भवान्तरेऽपि वा, शल्यान्यपत्यानि न वेत्सि किं हृदि । चलाचलैर्यैर्विविधार्तिदानतोऽनिशं निहन्येत समाधिरात्मनः ॥ २ ॥ कुक्षौ युवत्याः कृमयो विचित्रा, अप्यस्रशुक्रप्रभवा भवन्ति । न तेषु तस्या नहि तत्पतेश्च, रागस्ततोऽयं किमपत्यकेषु ॥ ३ ॥ त्राणाशक्तेरापदि सम्बन्धानन्त्यतो मिथोऽङ्गवताम् । संदेहाच्चोपकृतेर्मापत्येषु स्निहो जीव ॥ ४ ॥



## अथ चतुर्थो धनममत्वमोचनाधिकारः

याः सुखोपकृतिकृत्त्वधिया त्वं, मेलयन्नसि रमा ममताभाक् । पाप्मनोऽधिकरणत्वत एता, हेतवो ददति संसृतिपातम् ॥ १ ॥ यानि द्विषामप्युपकारकाणि, सर्पादुरादिष्वपि यैर्गतिश्च । शक्या च नापन्मरणामयाद्या, हन्तुं धनेष्वेषु क एव मोहः ॥ २ ॥ ममत्वमात्रेण मनःप्रसादसुखं धनैरल्पकमल्पकालम् । आरम्भपापैः सुचिरं तु दुःखं, स्याद्दुर्गतौ दारुणमित्यवेहि ॥ ३ ॥ द्रव्यस्तवात्मा धनसाधनो न धर्मोऽपि सारम्भतयातिशुद्धः । निःसङ्गतात्मा त्वतिशुद्धयोगात्, मुक्तिश्रियं यच्छति तद्भवेऽपि ॥ ४ ॥ क्षेत्रवास्तुधनधान्यगवाश्वैर्मेलितैः सनिधिभिस्तनुभाजाम् । क्लेशपापनरकाभ्यधिकः स्यात्को गुणो न यदि धर्मनियोगः ॥ ५ ॥ आरम्भैर्भरितो निमज्जति यतः प्राणी भवाम्भोनिधावीहन्ते कुनृपादयश्च पुरुषा येन च्छलाद्बाधितुम् । चिन्ताव्याकुलताकृतेश्च हरते यो धर्मकर्मस्मृतिं, विज्ञा भूरिपरिग्रहं त्यजत तं भोग्यं परैः प्रायशः ॥ ६ ॥ क्षेत्रेषु नो वपसि यत्सदपि

स्त्वमेतयातासि तत्परभवे किमिदं गृहीत्वा । तस्यार्जनादिजनिताघचया-र्जिताते, भावी कथं नरकदुःखभराच्च मोक्षः ॥ ७ ॥

अथ पंचमो देहममत्वमोचनाधिकारः

पुष्णासि यं देहमघान्यचिंतयस्तवोपकारं कमयं विधास्यति । कर्माणि कुर्वन्निति चिंतयायतिं, जगत्ययं वंच्यते हि धूर्तराट् ॥ १ ॥ कारागृहाद्बहुविधाशुचितादिदुःखान्निर्गन्तुमिच्छति जडोऽपि हि तद्विभिन्नः । क्षिप्तस्ततोऽधिकतरे वपुषि स्वकर्मव्रातेन तद्दृढयितुं यतसे किमात्मन् ॥ २ ॥ चेद्वाञ्छसीदमवितुं परलोकदुःखभीत्या ततो न कुरुषे किमु पुण्यमेव । शक्यं न रक्षितुमिदं हि न दुःखभीतिः पुण्यं विना क्षयमुपैति च वज्रिणोऽपि ॥ ३ ॥ देहे विमुह्य कुरुषे किमघं न वेत्सि, देहस्थ एव भजसे भवदुःखजालम् । लोहाश्रितो हि सहते घनघातमग्निर्बाधा न तेऽस्य च नभोवदनाश्रयत्वे ॥ ४ ॥ दुष्टः कर्मविपाकभूपतिवशः कायाह्वयः कर्मकृत्, बद्ध्वा कर्मगुणैर्हृषीकचषकैः पीतप्रमादासवम् । कृत्वा नारकचारकापदुचितं त्वां प्राप्य चाशु च्छलं, गन्तेति स्वहिताय संयमभरं तं वाहयाल्पं ददत् ॥ ५ ॥ यतः शुचीन्यप्यशुचीभवन्ति । कृम्याकुलात्काकशुनादिभक्ष्यात् । द्राग्भाविनो भस्मतया ततोऽङ्गात्, मांसादिपिंडात् स्वहितं गृहाण ॥ ६ ॥ परोपकारोऽस्ति तपो जपो वा, विनश्वराद्यस्य फलं न देहात् । सभाटकादल्पदिनाप्तगेहमृत्पिंडमूढः फलमश्नुते किम् ॥ ७ ॥ मृत्पिंडरूपेण विनश्वरेण, जुगुप्सनीयेन गदालयेन । देहेन चेदात्महितं सुसाधं, धर्मान्न किं तद्यतसेऽत्र मूढ ! ॥ ८ ॥

अथ षष्ठो विषयप्रमादत्यागाधिकारः

अत्यल्पकल्पितसुखाय किमिंद्रियार्थैस्त्वं मुह्यसि प्रतिपदं प्रचुरप्रमादः । एते क्षिपन्ति गहने भवभीमकक्षे, जन्तून्न यत्र सुलभा शिवमार्गदृष्टिः ॥१॥ आपातरम्ये परिणामदुःखे, सुखे कथं वैषयिके रतोऽसि । जडोऽपि कार्यं रचयन् हितार्थी, करोति विद्वन् यदुदर्कतर्कम् ॥ २ ॥ यदिंद्रियार्थैरिह शर्म बिंदुवद्यदर्णवत्स्वःशिवगं परत्र च । तयोर्मिथोऽस्ति प्रतिपक्षता कृतिन्, विशेषदृष्ट्यान्यतरद् गृहाण तत् ॥ ३ ॥ भुंक्ते कथं नारकतिर्यगादिदुःखानि देहीत्यवधेहि शास्त्रैः । निवर्तते ते विषयेषु तृष्णा, बिभेषि

पापप्रचयाय येन ॥ ४ ॥ गर्भवासनरकादिवेदनाः, पश्यतोऽनवरतं श्रुते क्षणे । नो कषायविषयेषु मानसं, श्लिष्यते बुध विचिंतयेति ताः ॥५॥ वध्यस्य चौरस्य यथा पशोर्वा, संप्राप्यमाणस्य पदं वधस्य । शनैः शनैरेति मृतिं समीपं, तथाखिलस्येति कथं प्रमादः ॥ ६ ॥ बिभेषि जंतो[1] यदि दुःखराशेस्तदिंद्रियार्थेषु रतिं कृथा मा । तदुद्भवं नश्यति शर्म यद्द्राक्, नाशे च तस्य ध्रुवमेव दुःखम् ॥ ७ ॥ मृतः किमु प्रेतपतिर्दुरामया, गताः क्षयं किं नरकाश्च मुद्रिताः । ध्रुवाः किमायुर्धनदेहबंधवः, सकौतुको यद्विषयैर्विमुह्यसि ॥ ८ ॥ विमोह्यसे किं विषयप्रमादैर्भ्रमात्सुखस्यायतिदुःखराशेः । तद्गर्धमुक्तस्य हि यत्सुखं ते गतोपमं चायतिमुक्तिदं तत् ॥ ९ ॥

---

## अथ सप्तमः कषायत्यागाधिकारः

रे जीव सेहिथ सहिष्यसि च व्यथास्तास्त्वं नारकादिषु पराभवभूः कषायैः । मुग्धोदितैः कुवचनादिभिरप्यतः किं, क्रोधान्निहंसि निजपुण्यधनं दुरापम् ॥ १ ॥ पराभिभूतौ यदि मानमुक्तिस्ततस्तपोऽखंडमतः शिवं वा । मानादृतिर्दुर्वचनादिभिश्चेत्तपःक्षयस्तन्नरकादि दुःखम् ॥ २ ॥ वैरादि चात्रेति विचार्य लाभालाभौ कृतिन्नाभवसंभविन्याम् । तपोऽथवा मानमवा(था?)भिभूताविहास्ति नूनं हि गतिर्द्विधैव ॥३॥ श्रुत्वाक्रोशान् यो मुदा पूरितः स्यात्, लोष्टाद्यैर्यश्चाहतो रोमहर्षी । यः प्राणान्तेऽप्यन्यदोषं न पश्यत्येष श्रेयो द्राग् लभेतैव योगी ॥ ४ ॥ को गुणस्तव कदा च कषायैर्निममे भजसि नित्यमिमान् यत् । किं न पश्यसि दोषममीषां, तापमत्र नरकं च परत्र ॥ ५ ॥ यत्कषायजनितं तव सौख्यं, यत्कषायपरिहानिभवं च । तद्विशेषमथवैतदुदर्के, संविभाव्य भज धीर विशिष्टम् ॥६॥ सुखेन साध्या तपसां प्रवृत्तिर्यथा तथा नैव तु मानमुक्तिः । आद्या न दत्तेऽपि शिवं परा तु, निदर्शनाद्बाहुबलेः प्रदत्ते ॥ ७ ॥ सम्यग्विचार्येति विहाय मानं, रक्षन् दुरापाणि तपांसि यत्नात् । मुदा मनीषी सहतेऽभिभूतीः, शूरः क्षमायामपि नीचजाताः ॥८॥ पराभिभूत्याल्पिकयापि कुप्यस्यधैरपीमां प्रतिकर्तुमिच्छन् । न वेत्सि तिर्यङ्नरकादिकेषु, तास्तैरनंतास्त्वतुला भवित्रीः ॥९॥ धत्से कृतिन्[1] यद्यपकारकेषु, क्रोधं ततो धेह्यरिषट्क एव । अथोपकारिष्वपि तद्भवार्तिकृत्कर्महन्मित्रबहिर्द्विषत्सु ॥१०॥ अधीत्यनुष्ठानतपःशमायान्, धर्मान् विचित्रान् विदधत्समायान् । न लप्स्यसे तत्फलमात्म-

देहक्लेशाधिक ताश्च भवान्तरेषु ॥११॥ सुखाय धत्से यदि लोभमात्मनो, ज्ञानादिरत्नत्रितये विधेहि तत् । दुःखाय चेदत्र परत्र वा कृतिन्, परिग्रहे तद्बहिरान्तरेऽपि च ॥ १२ ॥ करोषि यत्प्रेत्यहिताय किंचित्, कदाचिदल्प सुकृत कथचित् । माऽजीहरस्तन्मदमत्सराद्यैर्विना च तन्मा नरकातिथिर्भू ॥ १३ ॥ पुरापि पापै पतितोऽसि ससृतौ, दधासि रे किं गुणिमत्सर पुन । न वेत्सि किं घोरजले निपात्यसे, नियन्त्र्यसे शृङ्खलया च सर्वत ॥ १४ ॥ कष्टेन धर्मो लवशो मिलत्ययं, क्षयं कषायैर्युगपत् प्रयाति च । अतिप्रयत्नार्जितमर्जुनं तत, किमङ्ग [1] ही हारयसे नभस्वता ॥ १५ ॥ शत्रूभवन्ति सुहृद कलुषीभवन्ति धर्मा यशासि निचितायशसीभवन्ति । स्निह्यन्ति नैव पितरोऽपि च बान्धवाश्च, लोकद्वयेऽपि विपदो भविना कषायै ॥ १६ ॥ रूपलाभकुलविक्रमविद्याश्रीतपोवितरणप्रभुताद्यै । किं मद वहसि वेत्सि न, मूढाऽनन्तश स्वभृशलाघवदु खम् ॥ १७ ॥ विना कषायान्न भवार्तिराशिर्भवेद्भवेदेव च तेषु सत्सु । मूल हि ससारतरो कषायास्तत्तान् विहायैव सुखी भवात्मन् ॥ १८ ॥ ॥ समीक्ष्य तिर्यङ्नरकादिवेदना, श्रुतेक्षणैर्धर्मदुरापता तथा । प्रमोदसे यद्विषयै सकषायै सुखी तुर्मन्तत्वात्मन् [1] विफलैव चेतना ॥ १९ ॥ चौरैस्तथा कर्मकरैर्गृहीते, दुष्टे स्वमात्रेऽप्युपतप्यसे त्वम् । पुष्टे प्रमादैस्तनुभिश्च पुण्यधन न किं वेत्स्यपि लुप्यमानम् ॥ २० ॥ मृत्यो कोऽपि न रक्षितो न जगतो दारिद्र्यमुत्त्रासित, रोगस्तेननृपादिजा न च भियो निर्णाशिता षोडश । विध्वस्ता नरका न नापि सुखिता धर्मैस्त्रिलोकी सदा, तत्को नाम गुणो मदश्च विभुता का ते स्तुतीच्छा च का ॥ २१ ॥

---

## अथाष्टम शास्त्रगुणाधिकार

शिलातलाभे हृदि ते वहति, विशन्ति सिद्धान्तरसा न चान्त । यदत्र नो जीवदयार्द्रता ते, न भावनाङ्कुरततिश्च लभ्या ॥ १ ॥ यस्यागमाम्भोदरसैर्न धौत, प्रमादपङ्क स कथ शिवेच्छु । रसायनैर्यस्य गदा क्षता नो, सुदुर्लभ जीवितमस्य नूनम् ॥ २ ॥ अधीतिनोऽर्चादिकृते जिनागम, प्रमादिनो दुर्गतिपापतेर्मुधा । ज्योतिर्विमूढस्य हि दीपपातिनो, गुणाय कस्मै शलभस्य चक्षुषी ॥३॥ मोदन्ते बहुतर्कतर्कणचणा केचिज्जयाद्वादिनाम्, काव्यै केचन कल्पितार्थघटनैस्तुष्टा कविख्यातित । ज्योतिर्नाटकनीति-

लक्षणधनुर्वेदादिशास्त्रे परे, भ्रम प्रेत्यहिते तु कर्मणि जडान् कुक्षिंभरी-नेव तान् ॥ ४ ॥ किं मोदसे पण्डितनाममात्रात्, शास्त्रेष्वधीती जनरञ्जनेषु । तत्किंचनाधीष्व कुरुष्व चाशु, न ते भवेद्येन भवाब्धिपातः ॥५॥ धिगागमैर्माद्यसि रञ्जयन् जनान्, नोद्यच्छसि प्रेत्यहिताय संयमे । दधासि कुक्षिंभरिमात्रतां मुने, क्व ते क्व तत् क्वैष च ते भवान्तरे ॥ ६ ॥ धन्याः केऽप्यनधीतिनोऽपि सदनुष्ठानेषु बद्धादरा दुःसाध्येषु परोपदेशलवतः श्रद्धानशुद्धाशयाः । केचित्त्वागमपाठिनोऽपि दधतस्तत्पुस्तकान् येऽलसा अत्रामुत्रहितेषु कर्मसु कथं ते भाविनः प्रेत्यहा ॥ ७ ॥ धन्यः स मुग्धमतिरप्युदिताहदाज्ञारागेण यः सृजति पुण्यमदुर्विकल्पः । पाठेन किं व्यसनतोऽस्य तु दुर्विकल्पैर्यो दुःस्थितोऽत्र सदनुष्ठितिषु प्रमादी ॥ ८ ॥ अधीतिमात्रेण फलन्ति नागमाः, समीहितैर्जीव सुखैर्भवान्तरे । स्वनुष्ठितैः किंतु तदीरितैः खरो, न यत्सिताया वहनश्रमात्सुखी ॥ ९ ॥ दुर्गन्धतो यदणुतोऽपि पुरस्य मृत्युरायूंषि सागरमितान्यनुपक्रमाणि । स्पर्शः खरः क्रकचतोऽतितमामितश्च, दुःखावनन्तगुणितौ भृशशैत्यतापौ ॥ १० ॥ तीव्रा व्यथा सुरकृता विविधाश्च यत्राक्रन्दारवैः सततमभ्रभृतोऽप्यमुष्मात् । किं भाविनो न नरकात्कुमते बिभेषि, यन्मोदसे क्षणसुखैर्विषयैः कषायी ॥ ११ ॥ युग्मम् ॥ वधोऽनिशं वाहनताडनानि, क्षुत्तृड्दुरामातपशीतवाताः । निजान्यजातीयभयापमृत्युदुःखानि तिर्यक्ष्विति दुःसहानि ॥ १२ ॥ मुधान्यदास्याभिभवाभ्यसूया भियोऽन्तगर्भस्थितिदुर्गतीनाम् । एवं सुरेष्वप्यसुखानि नित्यं, किं तत्सुखैर्वा परिणामदुःखैः ॥ १३ ॥ सप्तभीत्यभिभवेष्टविप्रवानिष्टयोगगददुःसुतादिभिः । स्याच्चिरं विरसता नृजन्मनः, पुण्यतः सरसता तदानयः ॥ १४ ॥ इति चतुर्गतिदुःखततीः कृतिन्नतिभयास्त्वमनन्तमनेहसम् । हृदि विभाव्य जिनोक्तकृतान्ततः, कुरु तथा न यथा स्युरिमास्तव ॥ १५ ॥ आत्मन् परस्त्वमसि साहसिकः श्रुताक्षैर्यद्भाविनं चिरचतुर्गतिदुःखराशिम् । पश्यन्नपीह न बिभेषि ततो न तस्य, विच्छित्तये च यतसे विपरीतकारी ॥ १६ ॥

---

अथ नवमश्चित्तदमनाधिकारः

कुकर्मजालैः कुविकल्पसूत्रजैर्निबध्य गाढं नरकाग्निभिश्चिरम् । विसारवत् पक्ष्यति जीव ! हे मन कैवर्तकस्त्वामिति मास्म विश्वसीः ॥ १ ॥

चेतोऽर्थये मयि चिरन्तनसख ! प्रसीद, किं दुर्विकल्पनिकरैः क्षिपसे भवे माम् । बद्धाऽञ्जलिः कुरु कृपां भज सद्विकल्पान्, मैत्रीं कृतार्थय यतो नरकाद्बिभेमि ॥ २ ॥ स्वर्गापवर्गौ नरकं तथान्तर्मुहूर्तमात्रेण वशावशं यत् । ददाति जन्तोः सततं प्रयत्नात्, वशं तदन्तःकरणं कुरुष्व ॥ ३ ॥ सुखाय दुःखाय च नैव देवा, न चापि कालः सुहृदोऽरयो वा । भवेत्परं मानसमेव जन्तोः, संसारचक्रभ्रमणैकहेतुः ॥ ४ ॥ वशं मनो यस्य समाहितं स्यात्, किं तस्य कार्यं नियमैर्यमैश्च ? । हतं मनो यस्य च दुर्विकल्पैः, किं तस्य कार्यं नियमैर्यमैश्च ? ॥ ५ ॥ दानश्रुतध्यानतपोऽर्चनादि, वृथा मनोनिग्रहमन्तरेण । कषायचिन्ताकुलतोज्झितस्य परो हि योगो मनसो वशत्वम् ॥ ६ ॥ जपो न मुक्त्यै न तपो द्विभेदं, न संयमो नापि दमो न मौनम् । न साधनाद्यं पवनादिकस्य, किन्त्वेकमन्तःकरणं सुदान्तम् ॥ ७ ॥ लब्ध्वापि धर्मं सकलं जिनोदितं, सुदुर्लभं पोतनिभं विहाय च । मनःपिशाचग्रहिलीकृतः पतन्, भवाम्बुधौ नायतिदृग् जडो जनः ॥ ८ ॥ सुदुर्जयं ही रिपवत्यदो मनो, रिपूकरोत्येव च वाक्तनू अपि । त्रिभिर्हतस्तद्रिपुभिः करोतु किं, पदीभवन् दुर्विपदां पदे पदे ॥ ९ ॥ रे चित्त ! वैरि ! तव किं नु मयापराद्धं, यद्दुर्गतौ क्षिपसि मां कुविकल्पजालैः । जानासि मामयमपास्य शिवेऽस्मि गन्ता, तत्किं न सन्ति तव वासपदं ह्यसंख्याः ॥१०॥ पूतिश्रुतिः श्वेव रतेर्विदूरे, कुष्ठीव संपत्सुदृशामनर्हः । श्वपाकवत्सद्गतिमन्दिरेषु, नार्हेत्प्रवेशं कुमनोहतोऽङ्गी ॥ ११ ॥ तपोजपाद्याः स्वफलाय धर्मा, न दुर्विकल्पैर्हतचेतसः स्युः । तत्खाद्यपेयैः सुभृतेऽपि गेहे, क्षुधातृषाभ्यां म्रियते स्वदोषात् ॥१२॥ अकृच्छ्रसाध्यं मनसो वशीकृतात्, परं च पुण्यं न तु यस्य तद्वशम् । स वञ्चितः पुण्यचयैस्तदुद्भवैः, फलैश्च ही ! ही ! हतकः करोतु किम् ? ॥ १३ ॥ अकारणं यस्य च दुर्विकल्पैर्हतं मनः शास्त्रविदोऽपि नित्यम् । घोरैरवैर्निश्चितनारकायुर्मृत्यौ प्रयाता नरके स नूनम् ॥ १४ ॥ योगस्य हेतुर्मनसः समाधिः, परं निदानं तपसश्च योगः । तपश्च मूलं शिवशर्मवल्ल्या, मनःसमाधिं भज तत्कथञ्चित् ॥ १५ ॥ स्वाध्याययोगैश्चरणक्रियासु, व्यापारणैर्द्वादशभावनाभिः । सुधीस्त्रियोगीसदसत्प्रवृत्तिफलोपयोगैश्च मनो निरुन्ध्यात् ॥ १६ ॥ भावनापरिणामेषु, सिंहेष्विव मनोवने । सदा जाग्रत्सु दुर्ध्यानसूकरा न विशन्त्यपि ॥ १७ ॥

## अथ दशमो वैराग्योपदेशाधिकारः

किं जीव माद्यसि हससीयसीहसेऽर्थान्, कामांश्च खेलसि तथा कुतु वैरशक । चिक्षिप्सु घोरनरकावटकोटरे त्वामभ्यापतल्लघु विभावय मृत्युरक्ष ॥ १ ॥ आलवन तव लयादिकुठारघाता, छिंदंति जीविततरु न हि यावदात्मन् । तावद्यतस्व परिणामहिताय तस्मिन्, छिन्ने हि क क च कथ भविता स्वतन्त्रः ॥ २ ॥ त्वमेव मोग्धा मतिमान् त्वमात्मन्, नेष्टाप्यनेष्टा सुखदु खयोस्त्वम् । दाता च भोक्ता च तयोस्त्वमेव, तच्चेष्टसे किं ? न यथा हितासि ॥ ३ ॥ कस्ते निरंजन ! चिर जनरंजनेन, धीमन् ! गुणोऽस्ति परमार्थदृशेति पश्य । त रंजयाशु विशदैश्चरितैर्भवाब्धौ, यस्त्वा पततमलं परिपातुमीष्टे ॥ ४ ॥ विद्वानहं सकललब्धिरहं नृपोऽहं, दाताहमद्भुतगुणोऽहमहं गरीयान् । इत्याद्यहंकृतिवशात्परितोषमेषि, नो वेत्सि किं परभवे लघुता भवित्रीम् ॥ ५ ॥ वेत्सि स्वरूपफलसाधनबाधनानि, धर्मस्य, त प्रभवसि स्ववशश्च कर्तुम् । तस्मिन् यतस्व मतिमन्नधुनेत्यमुत्र, किंचित्त्वया हि नहि सेत्स्यति भोत्स्यते वा ॥६॥ धर्मस्यावसरोऽस्ति पुद्गलपरावर्तैरनंतैस्तवाऽऽयात सप्रति जीव हे प्रसहतो दु खान्यनतान्ययम् । स्वल्पाह पुनरेष दुर्लभतमश्चास्मिन् यतस्वार्हतो, धर्मं कर्तुमिम विना हि नहि ते दु खक्षय कर्हिचित् ॥ ७ ॥ गुणस्तुतीर्वाञ्छसि निर्गुणोऽपि, सुखप्रतिष्ठादि विनापि पुण्यम् । अष्टांगयोग च विनापि सिद्धीर्वातूलता कापि नवा तवात्मन् ॥ ८ ॥ पदे पदे जीव ! पराभिभूती, पश्यन् किमीर्ष्यस्यधम परेभ्य । अपुण्यमात्मानमवैषि किं न, तनोषि किं वा नहि पुण्यमेव ॥ ९ ॥ किमर्दयन्निर्दयमंगिनो लघून्, विचेष्टसे कर्मसु ही प्रमादत । यदेकशोऽप्यन्यकृतार्दन सहत्यनंतशोऽप्यंग्ययमर्दन भवे ॥१०॥ यथा सर्पमुखस्थोऽपि, भेको जंतूनि भक्षयेत् । तथा मृत्युमुखस्थोऽपि, किमात्मन्नर्दसेऽगिन ॥ ११ ॥ आत्मानमल्पैरिह वचयित्वा, प्रकल्पितैर्वा तनुचित्तसौख्यै । भवाधमे किं जन ! सागराणि, सोढासि ही नारकदुःखराशीन् ॥ १२ ॥ उरभ्रकाकिण्युदबिन्दुकाम्रवणिक्त्रयीशाकटभिक्षुकाद्यै । निदर्शनैर्हारितमर्त्यजन्मा, दु खी प्रमादैर्बहु शोचितासि ॥ १३ ॥ पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखा प्रमादै । शोच्या यथा स्युर्मृतिबंधदु खैश्चिराय भावी त्वमपीति जंतो ! ॥ १४ ॥ पुरापि पापै पतितोऽसि दु खराशौ पुनर्मूढ ! करोषि तानि । मज्जन्महापंकिलवारिपूरे, शिला निजे

मूर्ध्नि गले च घत्से ॥ १५ ॥ पुन पुनर्जीव ! तवोपदिश्यते, बिभेषि दु खात्सुखमीहसे च चेत । कुरुष्व तत्किंचन येन वाछित, भवेत्तवास्तेऽवसरोऽयमेव यत् ॥ १६ ॥ धनाङ्गसौख्यस्वजनानसूनपि, त्यज त्यजैक न च धर्ममार्हतम् । भवन्ति धर्माद्धि भवे भवेऽर्थितान्यमून्यमीभि पुनरेष दुर्लभ ॥ १७ ॥ दु ख यथा बहुविध सहसेऽप्यकाम , काम तथा सहसि चेत्करुणादिभावै । अल्पीयसापि तव तेन भवान्तरे स्यादात्यन्तिकी सकलदु खनिवृत्तिरेव ॥ १८ ॥ प्रगल्भसे कर्मसु पापकेष्वरे, यदाशया शर्म न तद्विनानितम् । विभावयस्तच्च विनश्वर द्रुत, बिभेषि किं दुर्गतिदु खतो नहि ? ॥ १९ ॥ कर्माणि रे जीव ! करोषि तानि, यैस्ते भविष्यो विपदो ह्यनन्ता । ताभ्यो भिया तद्दधसेऽधुना किं ?, सभाविताभ्योऽपि भृशाकुलत्वम् ॥ २० ॥ ये पालिता वृद्धिमिता सहैव, स्निग्धा भृश स्नेहपद च ये ते । यमेन तानप्यदय गृहीतान्, ज्ञात्वापि किं न त्वरसे हिताय ? ॥ २१ ॥ यै क्लिश्यसे त्व धनबन्धुपत्ययश प्रभुत्वादिभिराशयस्थै । कियानिह प्रेत्य च तैर्गुणस्ते, साध्य किमायुश्च विचारयैवम् ॥ २२ ॥ किमु मुह्यसि गत्वरै पृथक्, कृपणैर्बन्धुवपु परिग्रहै । विमृशस्व हितोपयोगिनोऽवसरेऽस्मिन् परलोकपाथ ! रे ॥ २३ ॥ सुखमास्से सुख शेषे, भुङ्क्षे पिबसि खेलसि । न जाने त्वग्रत पुण्यैर्विना ते किं भविष्यति ? ॥ २४ ॥ शीतात्तापा मक्षिकाकत्तृणादिस्पर्शाद्युत्थात्कष्टतोऽल्पाद्बिभेषि । तास्ताश्चैभि कर्मभि स्वीकरोषि, श्वभ्रादीना वेदना धिग् धिय ते ॥ २५ ॥ क्वचित्कषायै क्वचन प्रमादै, कदाग्रहै क्वापि च मत्सराद्यै । आत्मानमात्मन् कलुषीकरोषि, बिभेषि धिङ् नो नरकादधर्मा ॥ २६ ॥

---

## अथैकादशो धर्मशुद्ध्युपदेशाधिकार

भवेद्भवापायविनाशनाय य, तमज्ञ ! धर्म कलुषीकरोषि किम् ? । प्रमादमानोपधिमत्सरादिभिर्न मिश्रित ह्यौषधमामयापहम् ॥ १ ॥ शैथिल्यमात्सर्यकदाग्रहक्रुधोऽनुतापदम्भाविधिगौरवाणि च । प्रमादमानौ कुगुरु कुसगति , श्लाघार्थिता वा सुकृते मला इमे ॥ २ ॥ यथा तवेष्टा स्वगुणप्रशसा, तथा परेषामिति मत्सरोज्झी । तेषामिमा सतनु यल्लभेथास्ता नेष्टदानादि(द्वि?) विनेष्टलाभ ॥ ३ ॥ जनेषु गृह्णत्सु गुणान प्रमोदसे, ततो भवित्री गुणरिक्तता तव । गृह्णत्सु दोषान् परितप्यसे च चेद्, भव तु

दोषास्त्वयि सुस्थिरास्तत ॥ ४ ॥ प्रमोदसे स्वस्य यथान्यनिर्मितैः, स्तवैस्तथा चेत्प्रतिपन्थिनामपि । विगर्हणैः स्वस्य यथोपतप्यसे, तथा रिपूणामपि चेत्ततोऽसि वित् ॥ ५ ॥ स्तवैर्यथा स्वस्य विगर्हणैश्च, प्रमोदतापौ भजसे तथा चेत् । इमौ परेषामपि तैश्चतुर्ष्वप्युदासता वासि ततोऽर्थवेदी ॥ ६ ॥ भवेन्न कोऽपि स्तुतिमात्रतो गुणी, ख्यात्या न बह्व्यापि हितं परत्र च । तदिन्द्रियेर्ष्यादिभिरायतिं ततो, मुधाभिमानग्रहिलो निहंसि किम् ॥ ७ ॥ स्तुवन्ति के के न बहिर्मुखा जना प्रमादमात्सर्यकुबोधविप्लुताः । धनादिधर्माणि मलीमसान्यमूनुपेक्ष्य शुद्धं सुकृतं चराऽन्यपि ॥ ८ ॥ आच्छादितानि सुकृतानि यथा दधन्ते, सौभाग्यमत्र न तथा प्रकटीकृतानि । व्रीडानताननसरोजसरोजनेत्रावक्षःस्थलानि कलितानि यथा दुकूलैः ॥९॥ स्तुतैः श्रुतैर्वाप्यपरैर्निरीक्षितैर्गुणैस्तवात्मन् ! सुकृतैर्न कश्चन । फलन्ति नैव प्रकटीकृतैर्भुवो, द्रुमा हि मूलैर्निपतन्त्यपि त्वध ॥ १० ॥ तपःक्रियावश्यकदानपूजनैः, शिवं न गन्ता गुणमत्सरी जनः । अपथ्यभोजी न निरामयो भवेद्रसायनैरप्यतुलैर्यदातुरः ॥ ११ ॥ मन्त्रप्रभारत्नरसायनादिनिदर्शनादल्पमपीह शुद्धम् । दानार्चनावश्यकपौषधादि, महाफलं पुण्यमितोऽन्यथान्यत् ॥ १२ ॥ दीपो यथाल्पोऽपि तमांसि हन्ति, लवोऽपि रोगान् हरते सुधायाः । तृण्यां दहत्याशु कणोऽपि चाग्नेर्धर्मस्य लेशोऽप्यमलस्तथांहः ॥ १३ ॥ भावोपयोगशून्याः, कुर्वन्नावश्यकीः क्रियाः सर्वाः । देहक्लेशं लभसे, फलमाप्स्यसि नैव पुनरासाम् ॥ १४ ॥

## अथ द्वादशो देवगुरुधर्मशुद्ध्यधिकारः

तत्त्वेषु सर्वेषु गुरुः प्रधानं, हितार्थधर्मा हि तदुक्तिसाध्याः । श्रयंस्तमेवेत्यपरीक्ष्य मूढ !, धर्मप्रयासान् कुरुषे वृथैव ॥ १ ॥ भवी न धर्मैरविधिप्रयुक्तैर्गमी शिवं येषु गुरुर्न शुद्धः । रोगी हि कल्यो न रसायनैस्तैर्येषां प्रयोक्ता भिषगेव मूढः ॥ २ ॥ समाश्रितस्तारकबुद्धितो यो, यस्यास्त्यहो मज्जयिता स एव । ओघं तरीता विषमं कथं स, तथैव जन्तुः कुगुरोर्भवाब्धिम् ॥ ३ ॥ गजाश्वपोतोक्षरथान् यथेष्टपदाप्तये भद्र ! निजान् परान् वा । भजन्ति विज्ञाः सुगुणान् भजैवं, शिवाय शुद्धान् गुरुदेवधर्मान् ॥४॥ फलाद् वृथा स्युः कुगुरूपदेशतः, कृता हि धर्मार्थमपीह सूद्यमाः । तद्दृष्टिरागं परिमुच्य भद्र ! हे, गुरुं विशुद्धं भज चेद्धितार्थ्यसि ॥ ५ ॥

न्यस्ता मुक्तिपथस्य वात्सल्यतया श्रीवीर ! ये प्राक् त्वया, लुटाकास्त्वदृतेऽभवन् बहुतरास्त्वच्छासने ते कलौ । बिभ्राणा यतिनाम तत्तनुधिया मुष्णन्ति पुण्यश्रियं, पूत्कुर्मः किमराज्यके ह्यपि तलारक्षा न किं दस्यव ? ॥ ६ ॥ माद्यस्यशुद्धैर्गुरुदेवधर्मैर्धिग् दृष्टिरागेण गुणानपेक्ष । अमुत्र शोचिष्यसि तत्फले तु, कुपथ्यभोजीव महामयार्त्त ॥ ७ ॥ नाम्न सुसिक्तोऽपि ददाति निम्बक, पुष्टा रसैर्वन्ध्यगवी पयो न च । दुःस्थो नृपो नैव सुसेवित श्रियं, धर्मं शिवं वा कुगुरुर्न संश्रित ॥ ८ ॥ कुलं न जातिः पितरौ गणो वा, विद्या च बन्धुः स्वगुरुर्धनं वा । हिताय जन्तोर्न परं च किंचित्, किन्त्वादृता सद्गुरुदेवधर्मा ॥ ९ ॥ माता पिता स्व सुगुरुश्च तत्त्वात्, प्रबोध्य यो योजति शुद्धधर्मे । न तत्समोऽरि क्षिपते भवाब्धौ, यो धर्मविघ्नादिकृतेश्च जीवम् ॥ १० ॥ दाक्षिण्यलज्जे गुरुदेवपूजा, पित्रादिभक्तिः सुकृताभिलाष । परोपकारव्यवहारशुद्धी, नृणामिहामुत्र च संपदे स्यु ॥ ११ ॥ जिनेष्वभक्तिर्यमिनामवज्ञा, कर्मस्वनौचित्यमधर्मसङ्ग । पित्राद्युपेक्षा परवञ्चनञ्च, सृजन्ति पुंसां विपद समन्तात् ॥ १२ ॥ भक्त्यैव नार्चसि जिनं सुगुरोश्च धर्मं, नाकर्णयस्यविरतं विरतीर्न धत्से । सार्थं निरर्थमपि च प्रचिनोष्यघानि, मूल्येन केन तदमुत्र समीहसे शम् ? ॥ १३ ॥ चतुष्पदै सिंह इव स्वजातैर्मिलन्निमांस्तारयतीह कश्चित् । सहैव तैर्मज्जति कोऽपि दुर्गे, शृगालवत्त्वमिलन् वरं स ॥ १४ ॥ पूर्णे तटाके तृषित सदैव, भृतेऽपि गेहे क्षुधित स मूढ । कल्पद्रुमे सत्यपि ही दरिद्रो, गुर्वादियोगेऽपि हि य प्रमादी ॥१५॥ न धर्मचिन्ता गुरुदेवभक्तिर्येषां न वैराग्यलवोऽपि चित्ते । तेषां प्रसूक्लेशफलं पशूनामिवोद्भव स्यादुदरम्भरीणाम ॥ १६ ॥ न देवकार्ये न च संघकार्ये, येषां धन नश्वरमाशु तेषाम् । तदर्जनाद्यैर्वृजिनैर्भवाब्धौ, पतिष्यतां किं त्ववलम्बन स्यात् ? ॥ १७ ॥

---

## अथ त्रयोदशो यतिशिक्षोपदेशाधिकार

ते तीर्णा भववारिधिं मुनिवरास्तेभ्यो नमस्कुर्महे, येषां नो विषयेषु गृध्यति मनो नो वा कषायै प्लुतम् । रागद्वेषविमुक्त प्रशान्तकलुषं साम्याप्तशर्माद्वयं, नित्यं खेलति चात्मसंयमगुणाक्रीडे भजद्भावना ॥ १ ॥ स्वाध्यायमाधित्ससि नो प्रमादै, शुद्धा न गुप्ती समितीश्च धत्से । तपो द्विधा

नार्हसि देहमोहादल्पेऽपि हेतौ दधसे कषायान् ॥ २ ॥ परीषहान्नो सहसे न चोपसर्गान्न शीलाङ्गधरोऽपि चासि । तन्मोक्ष्यमाणोऽपि भवाब्धिपारं, मुने ! कथं यास्यसि वेषमात्रात् ॥ ३ ॥ युग्मम् ॥ आजीविकार्थमिह यद्यतिवेषमेष, धत्से चरित्रममलं न तु कष्टभीरुः । तद्वेत्सि किन्न ? न बिभेति जगज्जिघृक्षुर्मृत्युः कुतोऽपि नरकश्च न वेषमात्रात् ॥ ४ ॥ वेषेण माद्यसि यतेश्चरणं विनात्मन् !, पूजां च वाञ्छसि जनाद्बहुधोपधिं च । मुग्धप्रतारणभवे नरकेऽसि गन्ता, न्यायं बिभर्षि तदजागलकर्तरीयम् ॥ ५ ॥ जानेऽस्ति संयमतपोभिरमीभिरात्मन्नस्य प्रतिग्रहभरस्य न निष्क्रयोऽपि । किं दुर्गतौ निपततः शरणं तवास्ते ?, सौख्यं च दास्यति परत्र किमित्यवेहि ॥ ६ ॥ किं लोकसत्कृतिनमस्करणार्चनाद्यै, रे मुग्ध तुष्यसि विनापि विशुद्धयोगान् । कृन्तन् भवाब्धुपतने तव यत्प्रमादो, बोधिद्रुमाश्रयमिमानि करोति पशून् ॥ ७ ॥ गुणांस्तवाश्रित्य नमन्त्यमी जना, ददत्युपध्यालयभैक्ष्यशिष्यकान् । विना गुणान् वेषमृषेर्बिभर्षि चेत्, ततष्ठकानां तव भाविनी गतिः ॥ ८ ॥ नाजीविकाप्रणयिनीतनयादिचिन्ता, नो राजभीश्च भगवत्समयं च वेत्सि । शुद्धे तथापि चरणे यतसे न भिक्षो ?, तत्ते परिग्रहभरो नरकार्थमेव ॥ ९ ॥ शास्त्रज्ञोऽपि धृतव्रतोऽपि गृहिणीपुत्रादिबन्धोज्झितोऽप्यङ्गी यद्यतते प्रमादवशगो न प्रेत्यसौख्यश्रिये । तन्मोहद्विषतस्त्रिलोकजयिनः काचित्परा दुष्टता, बद्धायुष्कतया स वा नरपशुर्नूनं गमी दुर्गतौ ॥ १० ॥ उच्चारयस्यनुदिनं न करोमि सर्वं, सावद्यमित्यसकृदेतदथो करोषि । नित्यं मृषोक्तिजिनवचनभारितात्तत्, सावद्यतो नरकमेव विभावये ते ॥ ११ ॥ वेषोपदेशाद्युपधिप्रतारिता ददत्यभीष्टानृजवोऽधुना जनाः । भुङ्क्षे च शेषे च सुखं विचेष्टसे, भवान्तरे ज्ञास्यसि तत्फलं पुनः ॥ १२ ॥ आजीविकादिविविधार्त्तिभृशानिशार्त्ताः, कृच्छ्रेण केऽपि महतैव सृजन्ति धर्मान् । तेभ्योऽपि निर्दय ! जिघृक्षसि सर्वमिष्टं, नो संयमे च यतसे भविता कथं ही ॥ १३ ॥ आराधितो वा गुणवान् स्वयं तरन्, भवाब्धिमस्मानपि तारयिष्यति । श्रयन्ति ये त्वामिति भूरिभक्तिभिः, फलं तवैषां च किमस्ति निर्गुण ! ॥ १४ ॥ स्वयं प्रमादैर्निपतन् भवाम्बुधौ, कथं स्वभक्तानपि तारयिष्यसि ? । प्रतारयन् स्वार्थमृजून् शिवार्थिनः, स्वतोऽन्यतश्चैव विलुप्यसेंऽहसा ॥ १५ ॥ गृह्णासि शय्याहृतिपुस्तकोपधीन्, सदा परेभ्यस्तपसस्त्वियं स्थितिः । तत्ते प्रमादाद्भरिता-

त्यतिग्रहैश्चेर्णार्णममत्य परत्र का गति ? ॥ १६ ॥ न क्वापि सिद्धिर्न च तेऽतिशायि, मुने ! क्रियायोगतप श्रुतादि । तथाप्यहकारकदर्थितस्त्व, ख्यातीच्छया ताम्यसि धिङ् मुधा किम् ? ॥ १७ ॥ हीनोऽप्यरे भाग्यगुणैर्मुधात्मन्, वाछस्तवार्चोगनवाप्नुवश्च । ईर्ष्यन् परेभ्यो लभसेऽतितापमिहापि याता कुगतिं परत्र ॥ १८ ॥ गुणैर्विहीनोऽपि जनानतिस्तुतिप्रतिग्रहान् यन्मुदित प्रतीच्छसि । लुलायगोऽश्वोष्ट्रखरादिजन्मभिर्विना, ततस्ते भविता न निष्क्रय ॥ १९ ॥ गुणेषु नोद्यच्छसि चेन्मुने ! तत , प्रगीयसे यैरपि वन्द्यसेऽर्च्यसे । जुगुप्सिता प्रेत्य गतिं गतोऽपि तैर्हसिष्यसे चाभिभविष्यसेऽपि वा ॥ २० ॥ दानमानतुतिवन्दनापरैर्मोदसे, निकृतिरञ्जितैर्जनै । न त्ववैषि सुकृतस्य चेल्लव , कोऽपि सोऽपि तव लुट्यते हि तै ॥ २१ ॥ भवेद्गुणी मुग्धकृतैर्न हि स्तवैर्न ख्यातिदानार्चनवन्दनादिभि । विना गुणान्नो भवदु खसंभयस्ततो गुणानर्जय किं स्तवादिभि ॥ २२ ॥ अध्येपि शास्त्र सदसद्विचित्रालापादिभिस्ताम्यसि वा समायै । येषा जनानामिह रञ्जनाय, भवातरे ते क्व मुने ! क्व च त्वम् ॥ २३ ॥ परिग्रह चेद्व्यजहा गृहादेस्तत्किं नु धर्मोपकृतिच्छलात्तम् । करोपि शय्योपधिपुस्तकादेर्गरोऽपि नामातरतोऽपि हता ॥ २४ ॥ परिग्रहात्स्वीकृतधर्मसाधनाभिधानमात्रात्किमु मूढ ! तुष्यसि । न वेत्सि हेम्नाप्यतिभारिता तरी, निमज्जयत्यगिनमवुधौ द्रुतम् ॥ २५ ॥ येऽह कषायकलिकर्मनिबन्धभाजन, स्यु पुस्तकादिभिरपीहितधर्मसाधनै । तेषा रसायनवरैरपि सर्पदामयैरार्त्तात्मना गदहृते सुखकृत्तु किं भवेत् ॥ २६ ॥ रक्षार्थं खलु सयमस्य गदिता येऽर्था यतीना जिनैर्वास - पुस्तकपात्रकप्रभृतयो धर्मोपकृत्यात्मका । मूर्छन्मोहवशात्त एव कुधिया ससारपाताय धिक्, स्व स्वस्यैव वधाय शस्त्रमधिया यदुष्प्रयुक्त भवेत् ॥ २७ ॥ सयमोपकरणच्छलात्परान् भारयन् यदसि पुस्तकादिभि । गोखरोष्ट्रमहिषादिरूपभृत्तचिर त्वमपि भारयिष्यसे ॥ २८ ॥ वस्त्रपात्रतनुपुस्तकादिन , शोभया न खलु सयमस्य सा । आदिमा च ददते भव परा, मुक्तिमाश्रय तदिच्छयैकिकाम् ॥ २९ ॥ शीतातपाद्यान्न मनागपीह, परीषहाश्चेत्क्षमसे विसोढुम् । कथ ततो नारकगर्भवासदु खानि, सोढासि भवातरे त्वम् ? ॥ ३० ॥ मुने ! न किं नश्वरमस्वदेहमृत्पिंडमेन सुतपोव्रतायै । निपीड्य भीतिर्भवदु खराशेर्हित्वात्मसात्छैवसुख करोपि ? ॥ ३१ ॥ यदत्र कष्ट चरणस्य पालने,

विशेषदृष्टयान्यतरज्जहीहि तत् ॥ ३२ ॥ शमत्र यद्विन्दुरिव प्रमादज, परत्र यद्वाब्धिरिव द्युमुक्तिजम् । तयोर्मिथ सप्रतिपक्षता स्थिता, विशेषदृष्टयान्यतरद्गृहाण तत् ॥ ३३ ॥ नियन्त्रणा या चरणेऽत्र तिर्यक्स्त्रीगर्भकुम्भीनरकेषु या च । तयोर्मिथ सप्रतिपक्षभावाद्विशेषदृष्ट्यान्यतरां गृहाण ॥३४॥ सह तपोयमसंयमयन्त्रणा, स्ववशतासहने हि गुणो महान् । परवशस्त्वति भूरि सहिष्यसे, न च गुणं बहुमाप्स्यसि कंचन ॥ ३५ ॥ अणीयसा साम्यनियन्त्रणाभुवा, मुनेऽत्र कष्टेन चरित्रजेन च । यदि क्षयो दुर्गतिगर्भवासगाऽसुखावलेस्तत्किमवापि नार्थितम् ? ॥३६॥ त्यज स्पृहां स्व शिवशर्मलाभे, स्वीकृत्य तिर्यङ्नरकादिदुःखम् । सुखाणुभिश्चेद्विषयादिजातैः, संतोष्यसे संयमकष्टभीरुः ॥ ३७ ॥ समग्रचिन्तार्त्तिहतेरिहापि, यस्मिन्सुखं स्यात्परमं रतानाम् । परत्र चेन्द्रादिमहोदयश्रीः, प्रमाद्यसीहापि कथं चरित्रे ? ॥ ३८ ॥ महातपोध्यानपरीषहादि, न सत्त्वसाध्यं यदि धर्तुमीशः । तद्भावनाः किं समितीश्च गुप्तीर्धत्से शिवार्थिन् न मनःप्रसाध्याः ॥३९॥ अनित्यताद्या भज भावनाः सदा, यतस्व दुःसाध्यगुणेऽपि संयमे । जिघत्सया ते त्वरते ह्ययं यमः, (ह्रासयमः ?)श्रयन् प्रमादान्न भवाद्बिभेषि किम् ? ॥४०॥ हतं मनस्ते कुविकल्पजालैर्वचोऽप्यवद्यैश्च वपुः प्रमादैः । लब्धीश्च सिद्धीश्च तथापि वाञ्छन्, मनोरथैरेव हहा !! हतोऽसि ॥ ४१ ॥ मनोवशस्ते सुखदुःखसंगमो, मनो मिलेद्यैस्तु तदात्मकं भवेत् । प्रमादचोरैरिति वार्यतां मिलच्छीलाङ्गमित्रैरनुषञ्जयानिशम् ॥ ४२ ॥ ध्रुवः प्रमादैर्भववारिधौ मुने !, तव प्रपातः परमत्सरः पुनः । गले निबद्धोरुशिलोपमोऽस्ति चेत् कथं तदोन्मज्जनमप्यवाप्स्यसि ? ॥४३॥ महर्षयः केऽपि सहन्त्युदीर्याप्युग्रातपादीन्यदि निर्जरार्थम् । कष्टं प्रसङ्गागतमप्यणीयोऽपीच्छन् शिवं किं सहसे न भिक्षो ! ॥ ४४ ॥ यो दानमानस्तुतिवन्दनाभिर्न मोदतेऽन्यैर्न तु दुर्मनायते । अलाभलाभादिपरीषहान् सहन्, यतिः स तत्त्वादपरो विडम्बकः ॥ ४५ ॥ दधद्गृहस्थेषु ममत्वबुद्धिं, तदीयतप्त्या परितप्यमानः । अनिवृत्तान्तःकरणः सदा स्वैस्तेषां च पापैर्भ्रमिता भवेऽसि ॥ ४६ ॥ त्यक्त्वा गृहं स्वं परगेहचिन्तातप्तस्य को नाम गुणस्तवर्षे ! । आजीविकास्ते यतिवेषतोऽत्र, सुदुर्गतिः प्रेत्य तु दुर्निवारा ॥ ४७ ॥ कुर्वे न सावद्यमिति प्रतिज्ञां, वदन्नकुर्वन्नपि देहमात्रात् । शय्यादिकृत्येषु नुदन् गृहस्थान्, हृदा गिरा वाऽसि कथं मुमुक्षुः ? ॥ ४८ ॥ कथं महत्त्वाय ममत्वतो वा, सावद्यमिच्छस्यपि संघ-

लोके । न हेममय्यप्युदरे हि शस्त्री, क्षिप्ता क्षणोति क्षणतोऽप्यसून् किम् ? ॥ ४९ ॥ रङ्क कोऽपि जनाभिभूतिपदवीं त्यक्त्वा प्रसादाद्गुरो-र्वेषं प्राप्य यते कथंचन कियच्छास्त्रं पदं कोऽपि च । मौखर्यादिवशीकृतर्जुजनतादानार्चनैर्गर्वभा-गात्मानं गणयन्नरेन्द्रमिव धिग् गन्ता द्रुतं दुर्गतौ ॥ ५० ॥ प्राप्यापि चारित्रमिदं दुरापं, स्वदोषजैर्यद्विषयप्रमादैः । भवाम्बुधौ धिक् पतितोऽसि भिक्षो !, हतोऽसि दुःखैरनन्तकालम् ॥ ५१ ॥ कथमपि समवाप्य बोधिरत्नं, युगसमिलादिनिदर्शनाद्दुरापम् । कुरु कुरु रिपुवश्यतामगच्छन्, किमपि हितं लभसे यतोऽर्थितं शम् ॥ ५२ ॥ द्विषस्त्विमे ते विषयप्रमादा, असंवृता मानसदेहवाचः । असंयमाः सप्तदशापि हास्यादयश्च बिभ्यच्चर नित्यमेभ्यः ॥ ५३ ॥ गुरूनवाप्याप्यपहाय गेहमधीत्य शास्त्राण्यपि तत्त्ववाचि । निर्वाहचिंतादिभराद्यभावेऽप्यूपे ! न किं प्रेत्यहिताय यत्नः ? ॥५४॥ विराधितैः संयमसर्वयोगैः, पतिष्यतस्ते भवदुःखराशौ । शास्त्राणि शिष्योपधिपुस्तकाद्या, भक्ताश्च लोकाः शरणाय नालम् ॥ ५५ ॥ यस्य क्षणोऽपि सुरधामसुखानि पल्य-कोटीर्नृणां द्विनवतीं ह्यधिकां ददाति । किं हारयस्यधम ! संयमजीवितं तत्, हा हा प्रमत्त ! पुनरस्य कुतस्तवाप्तिः ? ॥५६॥ नाम्नापि यस्येति जनेऽसि पूज्यः, शुद्धात्ततो नेष्टसुखानि कानि । तत्संयमेऽस्मिन् यतसे मुमुक्षोऽनुभूयमानोरुफलेऽपि किं न ? ॥ ५७ ॥

---

## अथ चतुर्दशो मिथ्यात्वादिनिरोधाधिकारः

मिथ्यात्वयोगाविरतिप्रमादान्, आत्मन् ! सदा संवृणु सौख्यमिच्छन् । असंवृता यद्भवतापमेते, सुसंवृता मुक्तिरमां च दद्युः ॥ १ ॥ मनः संवृणु हे विद्वन् !, असंवृतमना यतः । याति तन्दुलमत्स्यो द्राक्, सप्तमीं नरकावनीम् ॥२॥ प्रसन्नचन्द्रराजर्षेर्मनःप्रसरसंवरौ । नरकस्य शिवस्यापि, हेतुभूतौ क्षणादपि ॥ ३ ॥ मनोऽप्रवृत्तिमात्रेण, ध्यानं नैकेन्द्रियादिषु । धर्म्यशुक्लमनःस्थैर्यभाजस्तु ध्यायिनः स्तुमः ॥४॥ सार्थं निरर्थकं वा यन्-मनः सुध्यानयन्त्रितम् । विरतं दुर्विकल्पेभ्यः, पारगास्तान् स्तुवे यतीन् ॥ ५ ॥ वचोऽप्रवृत्तिमात्रेण, मौनं के के न बिभ्रति । निरवद्यं वचो येषाम्, वचोगुप्तास्तु तान् स्तुवे ॥ ६ ॥ निरवद्यं वचो ब्रूहि, सावद्यवचनैर्यतः । प्रयाता नरकं घोरं, वसुराजादयो द्रुतम् ॥ ७ ॥ इहाऽमुत्र च वैराय, दुर्वाचो नरकाय च । अग्निदग्धाः प्ररोहन्ति, दुर्वाग्दग्धाः पुनर्न हि ॥ ८ ॥ अत एव

जिना दीक्षाकालादाकेवलोद्भवम् । अवद्यादिभिया ब्रूयुर्ज्ञानत्रयभृतोऽपि न ॥ ९ ॥ कृपया संवृणु स्वाङ्ग, कूर्मज्ञातनिदर्शनात् । संवृतासंवृताङ्गा यत्, सुखदु खान्यवाप्नुयु ॥ १० ॥ कायस्तम्भान्न के के स्युस्तरुस्तम्भादयो यता । शिवहेतुक्रियो येषा, कायस्तास्तु स्तुवे यतीन् ॥ ११ ॥ श्रुतिसयममात्रेण, शब्दान् कान् के त्यजन्ति न । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यज मुनि ॥१२॥ चक्षु सयममात्रात् के, रूपालोकास्त्यजन्ति न । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन्मुनि ॥ १३ ॥ घ्राणसयममात्रेण, गधान् कान् के त्यजन्ति न । इष्टानिष्टेषु चैतेषु, रागद्वेषौ त्यजन् मुनि ॥ १४ ॥ जिह्वासयममात्रेण, रसान् कान् के त्यजन्ति न । मनसा त्यज तानिष्टान्, यदीच्छसि तप फलम् ॥ १५ ॥ त्वच सयममात्रेण, स्पर्शान् कान के त्यजन्ति न । मनसा त्यज तानिष्टान्, यदीच्छसि तप फलम् ॥ १६ ॥ वस्तिसयममात्रेण, ब्रह्म के के न बिभ्रते । मन सयमतो धेहि, धीर ! चेत्तत्फलार्थ्यसि ॥ १७ ॥ विषयेंद्रियसयोगाभावात्के के न सयता । रागद्वेषमनोयोगाभावाद्ये तु स्तवीमि तान् ॥ १८ ॥ कषायान् सवृणु प्राज्ञ, नरक यदसवरात् । महातपस्विनोऽप्यापु , करटोत्करटादय ॥ १९ ॥ यस्यास्ति किंचिन्न तपोयमादि, ब्रूयात्स यत्तत्तुदता परान् वा । यस्यास्ति कष्टाप्तमिद तु कि न, तद्-भ्रशभी सवृणुते स योगान् ॥ २० ॥ भवेत्समग्रेष्वपि सवरेषु, पर निदान शिवसपदा य । त्यजन् कषायादिजदुर्विकल्पान्, कुर्यान्मन सवरमिद्धधीस्तम् ॥ २१ ॥ तदेवमात्मा कृतसवर स्यान्, नि सगताभाक् सतत सुखेन । नि सगभावादथ सवरस्तद्द्वय शिवार्थी युगपद्भजेत ॥२२॥

---

अथ पचदश शुभवृत्तिशिक्षोपदेशाधिकार

आवश्यकेष्वातनु यत्नमाप्तोदितेषु शुद्धेषु तमोऽपहेषु । न हत्यभुक्त हि न चाप्यशुद्ध, वैद्योक्तमप्यौषधमामयान् यत् ॥१॥ तपासि तन्व्याद्विविधानि नित्य, मुखे कटून्यायतिसुन्दराणि । निघ्नति तान्येव कुकर्मराशि, रसायनानीव दुरामयान् यत् ॥ २ ॥ विशुद्धशीलाङ्गसहस्रधारी, भवानिश निर्मितयोगसिद्धि । सहोपसर्गांस्तनुनिर्मम सन्, भजस्व गुप्ती समितीश्च सम्यक् ॥ ३ ॥ स्वाध्याययोगेषु दधस्व यत्न, मध्यस्थवृत्त्यानुसरागमार्थान् । अगारवो भैक्षमटाऽविषादी, हेतौ विशुद्धे वशितेंद्रियौघ ॥ ४ ॥ ददस्व धर्मार्थितयैव धर्म्यान्, सदोपदेशान् स्वपरादिसाम्यान् । जगद्धितैषी नवभिश्च

वल्पैर्ग्रामे कुले वा विहराऽप्रमत्त ॥ ५ ॥ कृतार्कन स्वस्य तपोजपादि, शक्तीशक्ती सुकृतेतरे च । सदा समीक्षस्व हृदाथ साध्ये, यतस्व हेय त्यज चाव्ययार्थी ॥ ६ ॥ परस्य पीडापरिवर्जनात्ते, त्रिधा त्रियोग्यप्यमला सदा स्तु । साम्यैकलीन गतदुर्विकल्प, मनो वचश्चाप्यनघप्रवृत्ति ॥ ७ ॥ मैत्री प्रमोद करुणा च सम्यक्, मध्यस्थता चानय साम्यमात्मन् । सद्भावनास्वात्मलय प्रयत्नात्, कृताविराम रमयस्व चेत ! ॥ ८ ॥ कुर्यान्न कुत्रापि ममत्वभाव, न च प्रभो ! रत्यरती कषायान् । इहापि सौख्य लभसेऽप्यनीहो, ह्यनुत्तरामर्त्यसुखाभमात्मन् ! ॥९॥ इति यतिवरशिक्षा योऽवधार्य व्रतस्थ-श्चरणकरणयोगानेकचित्त श्रयेत । सपदि भवमहाब्धिं क्लेशराशिं स तीर्त्वा, विलसति शिवसौख्यानन्तसायुज्यमाप्य ॥ १० ॥

---

## अथ षोडश. साम्यसर्वस्वाधिकार

१२ एव सदाभ्यासवशेन साम्य, नयस्व साम्य परमार्थवेदिन् ! । यत करस्था शिवसपदस्ते, भवन्ति सद्यो भवभीतिभेत्तु ॥ १ ॥ त्वमेव दु खं नरकस्त्वमेव, त्वमेव शर्मापि शिव त्वमेव । त्वमेव कर्माणि मनस्त्वमेव, १५ जहीह्यविद्यामवधेहि चात्मन् ! ॥ २ ॥ निःसगतामेहि सदा तदात्मन्नर्थेष्वशेषेष्वपि साम्यभावात् । अवेहि विद्वन् ! ममतैव मूल, शुचा सुखाना समतैव चेति ॥ ३ ॥ स्त्रीषु धूलिषु निजे च परे वा, सपदि प्रसरदापदि चात्मन् ! । तत्त्वमेहि समता ममतामुग्, येन शाश्वतसुखाद्वयमेषि ॥ ४ ॥ १८ तमेव सेवस्व गुरु प्रयत्नादधीष्व, शास्त्राण्यपि तानि विद्वन् ! । तदेव तत्त्व परिभावयात्मन् !, येभ्यो भवेत्साम्यसुधोपभोग ॥ ५ ॥ समग्रसच्छास्त्र- २१ महार्णवेभ्य , समुद्धृत साम्यसुधारसोऽयम् । निपीयता हे विबुधा ! लभध्वमिहापि मुक्ते सुखवर्णिका यत् ॥ ६ ॥ शान्तरसभावनात्मा, मुनिसुन्दरसूरिभि कृतो ग्रथ । ब्रह्मस्पृहया ध्येय , स्वपरहितोऽध्यात्मकल्पतरुरेष ॥ ७ ॥ इममिति मतिमानधीत्य चित्ते, रसयति यो विरसत्यय भवाद्राक् ! स च नियतमतो रमेत चास्मिन्, सह भववैरिजयश्रिया शिवश्री ॥ ८ ॥

इति सहस्रावधानिश्रीमुनिसुन्दरसूरिविरचितोऽध्यात्मकल्पद्रुम

न्यायविशारदमहोपाध्यायश्रीयशोविजयविरचित श्रीज्ञानसारसूत्रम् ।

**पूर्णाष्टकम्**—ऐन्द्रश्रीसुखमग्नेन लीलामग्नमिवाखिलम् । सच्चिदानन्दपूर्णेन पूर्णं जगदवेक्ष्यते ॥ १ ॥ पूर्णता या परोपाधेः सा याचितकमण्डनम् । या तु स्वाभाविकी सैव जात्यरत्नविभानिभा ॥ २ ॥ अवास्तवी विकल्पैः स्यात् पूर्णता ब्धेरिवोर्मिभिः । पूर्णानन्दस्तु भगवांस्तिमितोदधिसन्निभः ॥ ३ ॥ जागर्ति ज्ञानदृष्टिश्चेत् तृष्णा कृष्णाहिजाङ्गुली । पूर्णानन्दस्य तत्किं स्याद्दैन्यवृश्चिकवेदना ॥ ४ ॥ पूर्यन्ते येन कृपणास्तदुपेक्षैव पूर्णता । पूर्णानन्दसुधास्निग्धा दृष्टिरेषा मनीषिणाम् ॥ ५ ॥ अपूर्णः पूर्णतामेति पूर्यमाणस्तु हीयते । पूर्णानन्दस्वभावोऽयं जगदद्भुतदायकः ॥ ६ ॥ परस्वत्वकृतोन्माथा भूनाथा न्यूनतेक्षिणः । स्वस्वत्वसुखपूर्णस्य न्यूनता न हरेरपि ॥ ७ ॥ कृष्णे पक्षे परिक्षीणे शुक्ले च समुदञ्चति । द्योतते सकलाध्यक्षा पूर्णानन्दविधोः कला ॥ ८ ॥

**मग्नाष्टकम्**—प्रत्याहृत्येन्द्रियव्यूहं समाधाय मनो निजम् । दधच्चिन्मात्रविश्रान्तिर्मग्न इत्यभिधीयते ॥ १ ॥ यस्य ज्ञानसुधासिन्धौ परब्रह्मणि मग्नता । विषयान्तरसञ्चारस्तस्य हालाहलोपमः ॥ २ ॥ स्वभावसुखमग्नस्य जगत्तत्त्वावलोकिनः । कर्तृत्वं नान्यभावानां साक्षित्वमवशिष्यते ॥ ३ ॥ परब्रह्मणि मग्नस्य श्लथा पौद्गलिकी कथा । क्वामी चामीकरोन्मादाः स्फारा दारादराः क्व च ? ॥ ४ ॥ तेजोलेश्याविवृद्धिर्या साधोः पर्यायवृद्धितः । भाषिता भगवत्यादौ सेत्थम्भूतस्य युज्यते ॥ ५ ॥ ज्ञानमग्नस्य यच्छर्म तद्वक्तुं नैव शक्यते । नोपमेयं प्रियाश्लेषैर्नापि तच्चन्दनद्रवैः ॥ ६ ॥ शमशैत्यपुषो यस्य विप्रुषोऽपि महाकथा । किं स्तुमो ज्ञानपीयूषे तत्र सर्वाङ्गमग्नता ॥ ७ ॥ यस्य दृष्टिः कृपावृष्टिर्गिरः शमसुधाकिरः । तस्मै नमः शुभज्ञानध्यानमग्नाय योगिने ॥ ८ ॥

**स्थिरताष्टकम्**—वत्स ! किं चञ्चलस्वान्तो भ्रान्त्वा भ्रान्त्वा विषीदसि ? । निधिं स्वसन्निधावेव स्थिरता दर्शयिष्यति ॥ १ ॥ ज्ञानदुग्धं विनश्येत लोभविक्षोभकूर्चकैः । अम्लद्रव्यादिवास्थैर्यादिति मत्वा स्थिरो भव ॥२॥ अस्थिरे हृदये चित्रा वाङ्नेत्राऽऽकारगोपना । पुंश्चल्या इव कल्याणकारिणी न प्रकीर्तिता ॥ ३ ॥ अन्तर्गतं महाशल्यमस्थैर्यं यदि नोद्धृतम् । क्रियौषधस्य को दोषस्तदा गुणमयच्छतः ? ॥४॥ स्थिरता वाङ्मनःकायैर्येषामङ्गाङ्गितां गता । योगिनः शमशीलास्ते ग्रामेऽरण्ये दिवा

निशि ॥ ५ ॥ स्थैर्यरत्नप्रदीपश्चेद् दीप्रः सङ्कल्पदीपनैः । तद्विकल्पैरलं धूमैरलं धूमैस्तथाश्रवैः ॥६॥ उदीरयिष्यसि स्वान्तादस्थैर्यपवनं यदि । समाधिधर्ममेघस्य घटां विघटयिष्यसि ॥७॥ चारित्रं स्थिरतारूपमेतत्सिद्धेष्वपीष्यते । यतन्तां यतयोऽवश्यमस्या एव प्रसिद्धये ॥ ८ ॥

**मोहाष्टकम्**—अहं–ममेति मन्त्रोऽयं मोहस्य जगदान्ध्यकृत्। अयमेव हि नञ्पूर्वः प्रतिमन्त्रोऽपि मोहजित् ॥ १ ॥ शुद्धात्मद्रव्यमेवाहं शुद्धज्ञानं गुणो मम । नान्योऽहं न ममान्ये चेत्यदो मोहास्त्रमुल्बणम् ॥ २ ॥ यो न मुह्यति लग्नेषु भावेष्वौदयिकादिषु । आकाशमिव पङ्केन नाऽसौ पापेन लिप्यते ॥ ३ ॥ पश्यन्नेव परद्रव्यनाटकं प्रतिपाटकम् । भवचक्रपुरस्थोऽपि नामूढः परिखिद्यते ॥ ४ ॥ विकल्पचषकैरात्मा पीतमोहासवो ह्ययम् । भवोच्चतालमुत्तालप्रपञ्चमधितिष्ठति ॥ ५ ॥ निर्मलं स्फटिकस्येव सहजं रूपमात्मनः । अध्यस्तोपाधिसम्बन्धो जडस्तत्र विमुह्यति ॥६॥ अनारोपसुखं मोहत्यागादनुभवन्नपि । आरोपप्रियलोकेषु वक्तुमाश्चर्यवान् भवेत् ॥ ७ ॥ यश्चिद्दर्पणविन्यस्तसमस्ताचारचारुधीः । क नाम स परद्रव्येऽनुपयोगिनि मुह्यति ॥ ८ ॥

**ज्ञानाष्टकम्**—मज्जत्यज्ञः किलाज्ञाने विष्ठायामिव शूकरः । ज्ञानी निमज्जति ज्ञाने मराल इव मानसे ॥ १ ॥ निर्वाणपदमप्येकं भाव्यते यन्मुहुर्मुहुः । तदेव ज्ञानमुत्कृष्टं निर्बन्धो नास्ति भूयसा ॥ २ ॥ स्वभावलाभसंस्कारकारणं ज्ञानमिष्यते । ध्यान्ध्यमात्रमतस्त्वन्यत्तथा चोक्तं महात्मना ॥३॥ वादांश्च प्रतिवादांश्च वदन्तोऽनिश्चितांस्तथा । तत्त्वान्तं नैव गच्छन्ति तिलपीलकवद् गतौ ॥ ४ ॥ स्वद्रव्यगुणपर्यायचर्या वर्या पराऽन्यथा । इति दत्तात्मसन्तुष्टिर्मुष्टिज्ञानस्थितिर्मुनेः ॥ ५ ॥ अस्ति चेद् ग्रन्थिभिज्ज्ञानं किं चित्रैस्तन्त्रयन्त्रणैः ? । प्रदीपाः क्वोपयुज्यन्ते ? तमोघ्नी दृष्टिरेव चेत् ॥ ६ ॥ मिथ्यात्वशैलपक्षच्छिज्ज्ञानदम्भोलिशोभितः । निर्भयः शक्रवद् योगी नन्दत्यानन्दनन्दने ॥ ७ ॥ पीयूषमसमुद्रोत्थं रसायनमनौषधम् । अनन्यापेक्षमैश्वर्यं ज्ञानमाहुर्मनीषिणः ॥ ८ ॥

**शमाष्टकम्**—विकल्पविषयोत्तीर्णः स्वभावालम्बनः सदा । ज्ञानस्य परिपाको यः स शमः परिकीर्तितः ॥ १ ॥ अनिच्छन् कर्मवैषम्यं ब्रह्मांशेन समं जगत् । आत्माभेदेन यः पश्येदसौ मोक्षङ्गमी शमी ॥२॥ आरुरुक्षुर्मुनिर्योगं श्रयेद् बाह्यक्रियामपि । योगारूढः शमादेव शुद्ध्यत्यन्त-

गंतन्त्रिय ॥ ३ ॥ ध्यानवृष्टेर्दयानद्या शमपूरे प्रसर्पति । विकारतीरवृक्षाणा मूलादुन्मूलन भवेत् ॥ ४ ॥ ज्ञानध्यानतप शीलसम्यक्त्वसहितोऽप्यहो ! त नाप्नोति गुण साधुर्यमाप्नोति शमान्वित ॥ ५ ॥ स्वयम्भूरमणस्पर्द्धिवर्द्धिष्णुसमतारस । मुनिर्येनोपमीयेत कोऽपि नासौ चराचरे ॥ ६ ॥ शमसूक्तसुधासिक्त येषा नक्त दिन मन । कदापि ते न दह्यन्ते रागोरगविषोर्मिभि ॥ ७ ॥ गर्जज्ज्ञानगजोत्तुङ्गरङ्गद्ध्यानतुरङ्गमा । जयन्ति मुनिराजस्य शमसाम्राज्यसम्पद ॥ ८ ॥

**इन्द्रियजयाष्टकम्**—बिभेषि यदि ससारा मोक्षप्राप्ति च काङ्क्षसि । तदेन्द्रियजय कर्तुं स्फोरय स्फारपौरुषम् ॥ १ ॥ वृद्धास्तृष्णाजलापूर्णैरालवालै किलेन्द्रियै । मूर्च्छामतुच्छा यच्छन्ति विकारविषपादपा ॥ २ ॥ सरित्सहस्रदुष्पूरसमुद्रोदरसोदरः । तृप्तिमानेन्द्रियग्रामो भव तृप्तोऽन्तरात्मना ॥ ३ ॥ आत्मान विषयै पाशैर्भववासपराङ्मुखम् । इन्द्रियाणि निबध्नन्ति मोहराजस्य किङ्करा ॥ ४ ॥ गिरिमृत्स्ना धन पश्यन् धावतीन्द्रियमोहित । अनादिनिधन ज्ञान धन पार्श्वे न पश्यति ॥ ५ ॥ पुर पुर स्फुरत्तृष्णामृगतृष्णानुकारिषु । इन्द्रियार्थेषु धावन्ति त्यक्त्वा ज्ञानामृत जडा ॥ ६ ॥ पतङ्गभृङ्गमीनेभसारङ्गा यान्ति दुर्दशाम् । एकैकेन्द्रियदोषाच्चेद् दुष्टैस्तै कि न पञ्चभि ? ॥ ७ ॥ विवेकद्विपहर्यक्षै समाधिधनतस्करै । इन्द्रियैर्न जितो योऽसौ धीराणा धुरि गण्यते ॥८॥

**त्यागाष्टकम्**—सयमात्मा श्रयेच्छुद्धोपयोग पितर निजम् । धृतिमम्बा च पितरौ तन्मा विसृजत ध्रुवम् ॥ १ ॥ युष्माक सङ्गमोऽनादिर्बन्धवोऽनियतात्मनाम् । ध्रुवैकरूपान् शीलादिबन्धूनित्यधुनाश्रये ॥ २ ॥ कान्ता मे समतैवैका, ज्ञातयो मे समक्रिया । बाह्यवर्गमिति त्यक्त्वा धर्मसन्यासवान् भवेत् ॥ ३ ॥ धर्मास्त्याज्या सुसङ्गोत्था क्षायोपशमिका अपि । प्राप्य चन्दनगन्धाभ धर्मसन्यासमुत्तमम् ॥४॥ गुरुत्व स्वस्य नोदेति शिक्षासात्म्येन यावता । आत्मतत्त्वप्रकाशेन तावत्सेव्यो गुरूत्तम ॥ ५ ॥ ज्ञानाचारादयोऽपीष्टा शुद्धस्वस्वपदावधि । निर्विकल्पे पुनस्त्यागे न विकल्पो न च क्रिया ॥ ६ ॥ योगसन्यासतस्त्यागी योगानप्यखिलास्त्यजेत् । इत्येव निर्गुण ब्रह्म परोक्तमुपपद्यते ॥ ७ ॥ वस्तुतस्तु गुणै पूर्णमनन्तैर्भासते स्वत । रूप त्यक्तात्मन साधोर्निरभ्रस्य विधोरिव ॥ ८ ॥

**क्रियाष्टकम्**—ज्ञानी क्रियापर शान्तो भावितात्मा जितेन्द्रिय ।

स्वय तीर्णो भवाम्भोधे परास्तारयितु क्षम ॥ १ ॥ क्रियाविरहित हन्त ! ज्ञानमात्रमनर्थकम् । गतिं विना पथज्ञोऽपि नाप्नोति पुरमीप्सितम् ॥ २ ॥ स्वानुकूला क्रिया काले ज्ञानपूर्णोऽप्यपेक्षते । प्रदीप स्वप्रकाशोऽपि तैलपूर्त्यादिक यथा ॥ ३ ॥ बाह्यभाव पुरस्कृत्य ये क्रियाव्यवहारत । वदने कवलक्षेप विना ते तृप्तिकाङ्क्षिण ॥ ४ ॥ गुणवद्बहुमानादेर्नित्यस्मृत्या च सत्क्रिया । जात न पातयेद्भावमजात जनयेदपि ॥ ५ ॥ क्षायोपशमिके भावे या क्रिया क्रियते तया । पतितस्यापि तद्भावप्रवृद्धिर्जायते पुन ॥ ६ ॥ गुणवृद्ध्यै तत कुर्यात् क्रियामस्खलनाय वा । एक तु सयमस्थान जिनानामवतिष्ठते ॥ ७ ॥ वचोऽनुष्ठानतोऽसङ्गक्रियासङ्गतिमङ्गति । सेय ज्ञानक्रियाभेदभूमिरानन्दपिच्छला ॥ ८ ॥

**तृप्त्यष्टकम्**—पीत्वा ज्ञानामृत भुक्त्वा क्रियासुरलताफलम् । साम्यताम्बूलमास्वाद्य तृप्तिं याति परा मुनि ॥ १ ॥ स्वगुणैरेव तृप्तिश्चेदाकाल मविनश्वरी । ज्ञानिनो विषयै किं तैर्यैर्भवेत्तृप्तिरित्वरी ॥ २ ॥ या शान्तैकरसास्वादाद्भवेत्तृप्तिरतीन्द्रिया । सा न जिह्वेन्द्रियद्वारा षड्रसास्वादनादपि॥३॥ ससारे स्वप्नवन्मिथ्या तृप्ति स्यादाभिमानिकी । तथ्या तु भ्रान्तिशून्यस्य सात्मवीर्यविपाककृत् ॥ ४ ॥ पुद्गलै पुद्गलास्तृप्तिं यान्त्यात्मा पुनरात्मना । परतृप्तिसमारोपो ज्ञानिनस्तन्न युज्यते ॥ ५ ॥ मधुराज्यमहाशाकाग्राह्ये बाह्ये च गोरसात् । परब्रह्मणि तृप्तिर्या जनास्ता जानतेऽपि न ॥ ६ ॥ विषयोर्मिविषोद्गार स्यादतृप्तस्य पुद्गलै । ज्ञानतृप्तस्य तु ध्यानसुधोद्गारपरम्परा ॥७॥ सुखिनो विषयातृप्ता नेन्द्रोपेन्द्रादयोऽप्यहो । भिक्षुरेक सुखी लोके ज्ञानतृप्तो निरञ्जन ॥ ८ ॥

**निर्लेपाष्टकम्**—ससारे निवसन् स्वार्थसज्ज कज्जलवेश्मनि । लिप्यते निखिलो लोको ज्ञानसिद्धो न लिप्यते ॥ १ ॥ नाऽह पुद्गलभावाना कर्ता कारयितापि न । नानुमन्तापि चेत्यात्मा ज्ञानवान् लिप्यते कथम् ? ॥२॥ लिप्यते पुद्गलस्कन्धो न लिप्ये पुद्गलैरहम् । चित्रव्योमाञ्जनेनेव ध्यायन्निति न लिप्यते ॥ ३ ॥ लिप्तता ज्ञानसम्पातप्रतिघाताय केवलम् । निर्लेपज्ञानमग्नस्य क्रिया सर्वोपयुज्यते ॥ ४ ॥ तप श्रुतादिना मत्त क्रियावानपि लिप्यते । भावनाज्ञानसम्पन्नो निष्क्रियोऽपि न लिप्यते ॥ ५ ॥ अलिप्तो निश्चयेनात्मा, लिप्तश्च व्यवहारत । शुद्ध्यत्यलिप्तया ज्ञानी क्रियावान् लिप्तया दृशा ॥ ६ ॥ ज्ञानक्रियासमावेश सहैवोन्मीलने द्वयो । भूमिका

भेदतस्तत्र भवेदैकैरमुख्यता ॥ ७ ॥ सज्ञान यदनुष्ठान न लिप्त दोषपङ्कत । शुद्धबुद्धस्वभावाय तस्मै भगवते नम ॥ ८ ॥

**निस्पृहाष्टकम्**—स्वभावलाभात्किमपि प्राप्तव्य नावशिष्यते। इत्यात्मैश्वर्यसम्पन्नो निस्पृहो जायते मुनि ॥ १ ॥ सयोजितकरै के के प्रार्थ्यन्ते न स्पृहावहै । अमात्रज्ञानपात्रस्य निस्पृहस्य तृण जगत् ॥ २ ॥ छिन्दन्ति ज्ञानदात्रेण स्पृहाविषलता बुधा । मुखशोक च मूर्च्छा च दैन्य यच्छति यत्फलम् ॥ ३ ॥ निष्कासनीया विदुषा स्पृहा चित्तगृहाद्बहि । अनात्मरतिचाण्डालीसङ्गमङ्गीकरोति या ॥ ४ ॥ स्पृहावन्तो विलोक्यन्ते लघवस्तृणतूलवत् । महाश्चर्यं तथाप्येते मज्जन्ति भववारिधौ ॥ ५ ॥ गौरव पौरवन्द्यत्वात्प्रकृष्टत्व प्रतिष्ठया । ख्यातिं जातिगुणात् स्वस्य प्रादु कुर्यान्न निस्पृह ॥ ६ ॥ भूशय्या भैक्षमशन जीर्णं वासो वन गृहम् । तथापि निस्पृहस्याहो चक्रिणोऽप्यधिक सुखम् ॥ ७ ॥ परस्पृहा महादु ख निस्पृहत्व महासुखम् । एतदुक्त समासेन लक्षण सुखदु खयो ॥ ८ ॥

**मौनाष्टकम्**—मन्यते यो जगत्तत्त्व स मुनि परिकीर्त्तितः । सम्यक्त्वमेव तन्मौन मौन सम्यक्त्वमेव च ॥ १ ॥ आत्मात्मन्येव यच्छुद्ध जानात्यात्मानमात्मना । सेय रत्नत्रये ज्ञप्तिरुच्याचारैकता मुने ॥ २ ॥ चारित्रमात्मचरणाज्ज्ञान वा दर्शन मुने । शुद्धज्ञाननये साध्य क्रियालाभात् क्रियानये ॥ ३ ॥ यत प्रवृत्तिर्न मणौ लभ्यते वा न तत्फलम् । अतात्त्विकी मणिज्ञप्तिर्मणिश्रद्धा च सा यथा ॥ ४ ॥ तथा यतो न शुद्धात्मस्वभावाचरण भवेत् । फल दोषनिवृत्तिर्वा न तज्ज्ञान न दर्शनम् ॥५॥ यथा शोफस्य पुष्टत्व यथा वा वध्यमण्डनम् । तथा जानन भवोन्मादमात्मतृप्तो मुनिर्भवेत् ॥ ६ ॥ सुलभ वागनुच्चार मौनमेकेन्द्रियेष्वपि । पुद्गलेष्वप्रवृत्तिस्तु योगाना मौनमुत्तमम् ॥ ७ ॥ ज्योतिर्मयीव दीपस्य क्रिया सर्वापि चिन्मयी । यस्यानन्यस्वभावस्य तस्य मौनमनुत्तरम् ॥ ८ ॥

**विद्याष्टकम्**—नित्यशुच्यात्मताख्यातिरनित्याशुच्यनात्मसु । अविद्यातत्त्वधीर्विद्यायोगाचार्यं प्रकीर्त्तिता ॥ १ ॥ य पश्येन्नित्यमात्मानमनित्य परसङ्गमम् । छल लब्धु न शक्नोति तस्य मोहमलिम्लुच ॥ २ ॥ तरङ्गतरला लक्ष्मीमायुर्वायुवदस्थिरम् । अदभ्रधीरनुध्यायेदभ्रवद्भङ्गुर वपुः ॥ ३ ॥ शुचीन्यप्यशुचीकर्तुं समर्थेऽशुचिसम्भवे । देहे जलादिना शौचभ्रमो मूढस्य दारुण ॥ ४ ॥ य स्नात्वा समताकुण्डे हित्वा कश्मलज

मरम् । पुनर्न याति मालिन्य सोऽन्तरात्मा पर शुचि ॥ ५ ॥ आत्मबोधो नव पाशो देहगेहधनादिषु । य क्षिप्तोऽप्यात्मना तेषु स्वस्य बन्धाय जायते ॥ ६ ॥ मिथो युक्तपदार्थानामसङ्क्रमचमत्क्रिया । चिन्मात्रपरिणामेन विदुषैवानुभूयते ॥ ७ ॥ अविद्यातिमिरध्वसे दृशा विद्याञ्जनस्पृशा । पश्यन्ति परमात्मानमात्मन्येव हि योगिन ॥ ८ ॥

**विवेकाष्टकम्**—कर्मजीव च सश्लिष्ट सर्वदा क्षीरनीरवत् । विभिन्नीकुरुते योऽसौ मुनिहसो विवेकवान् ॥ १ ॥ देहात्माद्यविवेकोऽय सर्वदा सुलभो भवे । भवकोट्यापि तद्भेदविवेकस्त्वतिदुर्लभ ॥ २ ॥ शुद्धेऽपि व्योम्नि तिमिराद्रेखाभिर्मिश्रता यथा । विकारैर्मिश्रता भाति तथात्मन्यविवेकत ॥ ३ ॥ यथा योधै कृत युद्ध स्वामिन्येवोपचर्यते । शुद्धात्मन्यविवेकेन कर्मस्कन्धोर्जित तथा ॥ ४ ॥ इष्टकाद्यपि हि स्वर्ण पीतोन्मत्तो यथेक्षते । आत्माभेदभ्रमस्तद्वद्देहादावविवेकिन ॥ ५ ॥ इच्छन्नपरमान् भावान् विवेकाद्रे पतत्यध । परम भावमन्विच्छन्नाविवेके निमज्जति ॥६॥ आत्मन्येवात्मन कुर्याद्य षट्कारकसङ्गतिम् । क्वाविवेकज्वरस्यास्य वैषम्य जडमज्जनात् ॥ ७ ॥ सयमास्त्र विवेकेन शाणेनोत्तेजित मुने । धृतिधारोल्बण कर्मशत्रुच्छेदक्षम भवेत् ॥ ८ ॥

**माध्यस्थ्याष्टकम्**—स्थीयतामनुपालम्भ मध्यस्थेनान्तरात्मना । कुतर्ककर्करक्षेपैस्त्यज्यता बालचापलम् ॥ १ ॥ मनोवत्सो युक्तिगवीं मध्यस्थस्यानुधावति । तामाकर्षति पुच्छेन तुच्छाग्रहमन कपि ॥ २ ॥ नयेषु स्वार्थसत्येषु मोघेषु परचालने । समशील मनो यस्य स मध्यस्थो महामुनि ॥ ३ ॥ स्वस्वकर्मकृतावेशा स्वस्वकर्मभुजो नरा । न राग नाऽपि च द्वेष मध्यस्थस्तेषु गच्छति ॥ ४ ॥ मन स्याद् व्यापृत यावत्परदोषगुणग्रहे । कार्य व्यग्र वर तावन्मध्यस्थेनाऽऽत्मभावने ॥ ५ ॥ विभिन्ना अपि पन्थान, समुद्र सरितामिव । मध्यस्थाना पर ब्रह्म प्राप्नुवन्त्येकमक्षयम् ॥ ६ ॥ स्वागम रागमात्रेण द्वेषमात्रात्परागमम् । न श्रयामस्त्यजामो वा किन्तु मध्यस्थया दृशा ॥ ७ ॥ मध्यस्थया दृशा सर्वेष्वपुनर्बन्धकादिषु । चारिसञ्जीविनीचारन्यायादाशास्महे हितम् ॥ ८ ॥

**निर्भयाष्टकम्**—यस्य नास्ति परापेक्षा स्वभावाद्वैतगामिन । तस्य किं भयभ्रान्तिक्लान्तिसन्तानतानवम् ॥ १ ॥ भवसौख्येन किं भूरिभयज्वलनभस्मना । सदा भयोज्झित ज्ञान सुखमेव विशिष्यते ॥ २ ॥ न गोप्य

क्वापि नारोप्य हेयं देयं च न क्वचित् । क्व भयेन मुनेः स्थेयं ज्ञेयं ज्ञानेन पश्यतः ॥ ३ ॥ एकं ब्रह्मास्त्रमादाय निघ्नन्मोहचमूं मुनिः । बिभेति नैव संग्रामशीर्षस्थ इव नागराट् ॥ ४ ॥ मयूरी ज्ञानदृष्टिश्चेत्प्रसर्पति मनोवने । वेष्टनं भयसर्पाणां न तदानन्दचन्दने ॥ ५ ॥ कृतमोहास्त्रवैफल्यं ज्ञानवर्म बिभर्ति यः । क्व भीस्तस्य क्व वा भङ्गः कर्मसङ्गरकेलिषु ॥ ६ ॥ तूलवल्लघवो मूढा भ्रमन्त्यभ्रे भयानिलैः । नैकं रोमापि तैर्ज्ञानगरिष्ठानां तु कम्पते ॥ ७ ॥ चित्ते परिणतं यस्य चारित्रमकुतोभयम् । अखण्डज्ञानराज्यस्य तस्य साधोः कुतो भयम् ? ॥८॥

**अनात्मशंसाष्टकम्**—गुणैर्यदि न पूर्णोऽसि कृतमात्मप्रशंसया । गुणैरेवासि पूर्णश्चेत्कृतमात्मप्रशंसया ॥ १ ॥ श्रेयोद्रुमस्य मूलानि स्वोत्कर्षाम्भःप्रवाहतः । पुण्यानि प्रकटीकुर्वन् फलं किं समवाप्स्यसि ? ॥ २ ॥ आलम्बिता हिताय स्युः परैः स्वगुणरश्मयः । अहो स्वयं गृहीतास्तु पातयन्ति भवोदधौ ॥ ३ ॥ उच्चत्वदृष्टिदोषोत्थस्वोत्कर्षज्वरशान्तिकम् । पूर्वपुरुषसिंहेभ्यो भृशं नीचत्वभावनम् ॥ ४ ॥ शरीररूपलावण्यग्रामारामधनादिभिः । उत्कर्षः परपर्यायैश्चिदानन्दघनस्य कः ॥ ५ ॥ शुद्धाः प्रत्यात्मसाम्येन पर्यायाः परिभाविताः । अशुद्धाश्चापकृष्टत्वान्नोत्कर्षाय महामुनेः ॥ ६ ॥ क्षोभं गच्छन्समुद्रोऽपि स्वोत्कर्षपवनेरितः । गुणौघान् बुद्बुदीकृत्य विनाशयसि किं मुधा ? ॥७॥ निरपेक्षानवच्छिन्नानन्तचिन्मात्रमूर्तयः । योगिनो गलितोत्कर्षापकर्षानल्पकल्पनाः ॥ ८ ॥

**तत्त्वदृष्ट्यष्टकम्**—रूपे रूपवती दृष्टिर्दृष्ट्वा रूपं विमुह्यति । मज्जत्यात्मनि नीरूपे तत्त्वदृष्टिस्त्वरूपिणी ॥ १ ॥ भ्रमवाटी बहिर्दृष्टिर्भ्रमच्छाया तदीक्षणम् । अभ्रान्तस्तत्त्वदृष्टिस्तु नास्यां शेते सुखाऽऽशया ॥ २ ॥ ग्रामाऽऽरामादि मोहाय यद्दृष्टं बाह्यया दृशा । तत्त्वदृष्ट्या तदेवान्तर्नीतं वैराग्यसम्पदे ॥ ३ ॥ बाह्यदृष्टेः सुधासारघटिता भाति सुन्दरी । तत्त्वदृष्टेस्तु सा साक्षाद्विण्मूत्रपिठरोदरी ॥ ४ ॥ लावण्यलहरीपुण्यं वपुः पश्यति बाह्यदृग् । तत्त्वदृष्टिः श्वकाकानां भक्ष्यं कृमिकुलाकुलम् ॥ ५ ॥ गजाश्वैर्भूपभुवनं विस्मयाय बहिर्दृशः । तत्राश्वेभवनात्कोऽपि भेदस्तत्त्वदृशस्तु न ॥६॥ भस्मना केशलोचेन वपुर्धृतमलेन वा । महान्तं बाह्यदृग् वेत्ति चित्साम्राज्येन तत्त्ववित् ॥ ७ ॥ न विकाराय विश्वस्योपकारायैव निर्मिताः । स्फुरत्कारुण्यपीयूषवृष्टयस्तत्त्वदृष्टयः ॥ ८ ॥

**सर्वसमृद्ध्यष्टकम्**—बाह्यदृष्टिप्रचारेषु मुद्रितेषु महात्मन । अन्तरेवावभासन्ते स्फुटाः सर्वा समृद्धय ॥ १ ॥ समाधिर्नन्दन धैर्यं, दम्भोलि समता शची । ज्ञान महाविमान च वासवश्रीरिय मुने ॥ २ ॥ विस्तारितक्रियाज्ञानचर्मच्छत्रो निवारयन् । मोहम्लेच्छमहावृष्टिं चक्रवर्ती न किं मुनि ॥३॥ नवब्रह्मसुधाकुण्डनिष्ठाधिष्ठायको मुनि । नागलोकेशवद्भाति क्षमा रक्षन् प्रयत्नत ॥४॥ मुनिरध्यात्मकैलाशे विवेकवृषभस्थित । शोभते विरतिज्ञप्तिगङ्गागौरीयुत शिव ॥ ५ ॥ ज्ञानदर्शनचन्द्रार्कनेत्रस्य नरकच्छिद । सुखसागरमग्नस्य कि न्यून योगिनो हरेः ? ॥६॥ या सृष्टिर्ब्रह्मणो बाह्या बाह्यापेक्षावलम्बिनी । मुने परानपेक्षान्तर्गुणसृष्टिस्ततोऽधिका ॥ ७ ॥ रत्नैस्त्रिभि पवित्रा या स्रोतोभिरिव जाह्नवी । सिद्धयोगस्य साप्यर्हत्पदवी न दवीयसी ॥ ८ ॥

**कर्मविपाकचिन्तनाष्टकम्**—दुःख प्राप्य न दीन स्यात्, सुख प्राप्य च विस्मित । मुनि कर्मविपाकस्य जानन्परवश जगत् ॥ १ ॥ येषा भ्रूभङ्गमात्रेण भज्यन्ते पर्वता अपि । तैरहो कर्मवैषम्ये भूपैर्भिक्षापि नाप्यते ॥२॥ जातिचातुर्यहीनोऽपि कर्मण्यभ्युत्थावहे । क्षणाद्रङ्कोऽपि राजा स्यात् छत्रच्छन्नदिगन्तर ॥ ३ ॥ विषमा कर्मण सृष्टिर्दृष्टा करभपृष्ठवत् । जात्यादिभूतिवैषम्यात् का रतिस्तत्र योगिन ? ॥ ४ ॥ आरूढा प्रशमश्रेणिं श्रुतकेवलिनोऽपि च । भ्राम्यन्तेऽनन्तससारमहो दुष्टेन कर्मणा ॥ ५ ॥ अर्वाक् सर्वापि सामग्री श्रान्तेव परितिष्ठति । विपाक कर्मण कार्यपर्यन्तमनुधावति ॥ ६ ॥ असावचरमावर्त्ते धर्मं हरति पश्यत । चरमावर्त्तिसाधोस्तु च्छलमन्विष्य दुष्यति ॥७॥ साम्य बिभर्ति य कर्मविपाक हृदि चिन्तयन् । स एव स्याच्चिदानन्दमकरन्दमधुव्रत ॥ ८ ॥

**भवोद्वेगाष्टकम्**—यस्य गम्भीरमध्यस्याऽज्ञानवज्रमय तलम् । रुद्धा व्यसनशैलौघै पन्थानो यत्र दुर्गमा ॥ १ ॥ पातालकलशा यत्र भृतास्तृष्णामहानिलै । कषायाश्चित्तसङ्कल्पवेलावृद्धिं वितन्वते ॥ २ ॥ स्मरौर्वाग्निर्ज्वलत्यन्तर्यत्र स्नेहेन्धन सदा । यो घोररोगशोकादिमत्स्यकच्छपसङ्कुल ॥ ३ ॥ दुर्बुद्धिमत्सरद्रोहैर्विद्युद्दुर्वातगर्जितै । यत्र सायात्रिका लोका पतन्त्युत्पातसङ्कटे ॥ ४ ॥ ज्ञानी तस्माद्भवाम्भोधेर्नित्योद्विग्नोऽतिदारुणात् । तस्य सन्तरणोपाय सर्वयत्नेन काङ्क्षति ॥ ५ ॥ तैलपात्रधरो यद्वद् राधावेधोद्यतो यथा । क्रियास्वनन्यचित्त स्याद्भवभीतस्तथा मुनि ॥६॥

विप विपस्य वह्निश्च वह्नेरेव यदौपधम् । तत्सत्य भवभीतानामुपसर्गेऽपि यन्न भी ॥ ७ ॥ स्थैर्यं भवभयादेव व्यवहारे मुनिर्व्रजेत् । स्वात्माराम समाधौ तु तदप्यन्तर्निमज्जति ॥ ८ ॥

**लोकसंज्ञात्यागाष्टकम्**—प्राप्त षष्ठ गुणस्थान भवदुर्गाद्रिलङ्घनम् । लोकसज्ञारतो न स्यान्मुनिर्लोकोत्तरस्थिति ॥ १ ॥ यथा चिन्तामणि दत्ते बठरो बदरीफलै । हहा जहाति सद्धर्म तथैव जनरञ्जनै ॥ २ ॥ लोकसज्ञामहानद्यामनुस्रोतोऽनुगा न के । प्रतिस्रोतोऽनुगस्त्वेको राजहंसो महामुनि ॥ ३ ॥ लोकमालम्ब्य कर्तव्य कृत बहुभिरेव चेत् । तदा मिथ्यादृशा धर्मो न त्याज्य स्यात्कदाचन ॥ ४ ॥ श्रेयोऽर्थिनो हि भूयासो लोके लोकोत्तरे न च । स्तोका हि रत्नवणिज स्तोकाश्च स्वात्मसाधका ॥५॥ लोकसज्ञाहता हन्त नीचैर्गमनदर्शनै । शसयन्ति स्वसत्यागमर्मघातमहाव्यथाम् ॥ ६ ॥ आत्मसाक्षिकसद्धर्मसिद्धौ कि लोकयात्रया । तत्र प्रसन्नचन्द्रश्च भरतश्च निदर्शनम् ॥ ७ ॥ लोकसज्ञोज्झित साधु परब्रह्मसमाधिमान् । सुखमास्ते गतद्रोहममतामत्सरज्वर ॥ ८ ॥

**शास्त्राष्टकम्**—चर्मचक्षुर्भृत सर्वे देवाश्चावधिचक्षुप । सर्वतश्चक्षुप सिद्धा साधव शास्त्रचक्षुपः ॥ १ ॥ पुर स्थितानिवोर्ध्वाधस्तिर्यग्लोकविवर्तिन । सर्वान् भावानवेक्षन्ते ज्ञानिन शास्त्रचक्षुपा ॥ २ ॥ शासनात्त्राणशक्तेश्च बुधैदशास्त्र निरुच्यते । वचन वीतरागस्य तत्तु नान्यस्य कस्यचित् ॥ ३ ॥ शास्त्रे पुरस्कृते तस्माद्वीतराग पुरस्कृत । पुरस्कृते पुनस्तस्मिन्नियमात् सर्वसिद्धय ॥ ४ ॥ अदृष्टार्थे नु धावन्त शास्त्रदीप विना जडा । प्राप्नुवन्ति पर खेद प्रस्खलन्त पदे पदे ॥ ५ ॥ शुद्धोञ्छाद्यपि शास्त्राज्ञानिरपेक्षस्य नो हितम् । भौतहन्तुर्यथा तस्य पदस्पर्शनिवारणम् ॥ ६ ॥ अज्ञानाहिमहामन्त्र स्वाच्छन्द्यज्वरलङ्घनम् । धर्मारामसुधाकुल्या शास्त्रमाहुर्महर्पय ॥ ७ ॥ शास्त्रोक्ताचारकर्ता च शास्त्रज्ञः शास्त्रदेशक । शास्त्रैकदृग् महायोगी प्राप्नोति परम पदम् ॥ ८ ॥

**परिग्रहाष्टकम्**—न परावर्तते राशेर्वक्रता जातु नोज्झति । परिग्रहग्रह कोऽय विडम्बितजगत्त्रय ॥ १ ॥ परिग्रहग्रहावेशाद्दुर्भापितरज किरा । श्रूयन्ते विकृता किं न ? प्रलापा लिङ्गिनामपि ॥२॥ यस्त्यक्त्वा तृणवद्बाह्यमान्तर च परिग्रहम् । उदास्ते तत्पदाम्भोज पर्युपास्ते जगत्त्रयी ॥ ३ ॥ चित्तेऽन्तर्ग्रन्थिगहने बहिर्निर्ग्रन्थता वृथा । त्यागात्कञ्चुकमात्रस्य भुजगो नहि

निर्विष ॥ ४ ॥ त्यक्ते परिग्रहे साधो प्रयाति सकल रज । पालित्यागे क्षणादेव सरस सलिल यथा ॥५॥ त्यक्तपुत्रकलत्रस्य मूर्च्छामुक्तस्य योगिन । चिन्मात्रप्रतिबद्धस्य का पुद्गलनियन्त्रणा ॥ ६ ॥ चिन्मात्रदीपको गच्छे निर्वातस्थानसन्निभे । निष्परिग्रहता स्थैर्यं धर्मोपकरणैरपि ॥ ७ ॥ मूर्च्छाछन्नधिया सर्वं जगदेव परिग्रह । मूर्च्छया रहितानान्तु जगदेवापरिग्रह ॥८॥

**अनुभवाष्टकम्**—सन्ध्येव दिनरात्रिभ्या केवलश्रुतयो पृथक् । बुधैरनुभवो दृष्ट केवलार्कारुणोदय ॥ १ ॥ व्यापार सर्वशास्त्राणा दिक्प्रदर्शनमेव हि । पार तु प्रापयत्येकोऽनुभवो भववारिधे ॥ २ ॥ अतीन्द्रिय पर ब्रह्म विशुद्धानुभव विना । शास्त्रयुक्तिशतेनापि न गम्य यद् बुधा जगु ॥३॥ ज्ञायेरन् हेतुवादेन पदार्था यद्यतीन्द्रिया । कालेनैतावता प्राज्ञै कृत स्यात्तेषु निश्चय ॥ ४ ॥ केषा न कल्पनादर्वी शास्त्रक्षीरान्नगाहिनी । विरलास्तद्रसास्वादविदोऽनुभवजिह्वया ॥ ५ ॥ पश्यन्ति ब्रह्म निर्द्वन्द्व निर्द्वन्द्वानुभव विना । कथ लिपिमयी दृष्टिर्वाङ्मयी वा मनोमयी ॥६॥ न सुषुप्तिरमोहत्वान्नापि च स्वापजागरौ । कल्पनाशिल्पविश्रान्तेस्तुर्यैवानुभवे दशा ॥ ७ ॥ अधिगत्याखिल शब्दब्रह्म शास्त्रदृशा मुनि । स्वसवेद्य परब्रह्मानुभवेनाधिगच्छति ॥ ८ ॥

**योगाष्टकम्**—मोक्षेण योजनाद्योग सर्वोऽप्याचार इष्यते । विशिष्य स्थानवर्णार्थालम्बनैकाग्र्यगोचर ॥ १ ॥ कर्मयोगद्वय तत्र ज्ञानयोगत्रय विदु । विरतेष्वेव नियमाद्बीजमात्र परेष्वपि ॥ २ ॥ कृपानिर्वेदसवेगप्रशमोत्पत्तिकारिण । भेदा प्रत्येकमत्रेच्छाप्रवृत्तिस्थिरसिद्धय ॥३॥ इच्छा तद्वत्कथाप्रीति प्रवृत्ति पालन परम् । स्थैर्यं बाधकभीहानि सिद्धिरन्यार्थसाधनम् ॥ ४ ॥ अर्थालम्बनयोश्चैत्यवन्दनादौ विभावनम् । श्रेयसे योगिन स्थानवर्णयोर्यत्न एव च ॥ ५ ॥ आलम्बनमिह ज्ञेय द्विविध रूप्यरूपि च । अरूपि गुणसायुज्ययोगोऽनालम्बन परम् ॥६॥ प्रीतिभक्तिवचोऽसङ्गै स्थानाद्यपि चतुर्विधम् । तस्मादयोगयोगाप्तेर्मोक्षयोग क्रमाद्भवेत् ॥७॥ स्थानाद्ययोगिनस्तीर्थोच्छेदाद्यालम्बनादपि । सूत्रदाने महादोष इत्याचार्या प्रचक्षते ८

**नियागाष्टकम्**—य कर्म हुतवान् दीप्ते ब्रह्माग्नौ ध्यानधाय्यया । स निश्चितेन यागेन नियागप्रतिपत्तिमान् ॥ १ ॥ पापध्वसिनि निष्कामे ज्ञानयज्ञे रतो भव । सावद्यै कर्मयज्ञै किं भूतिकामनयाविलै ॥ २ ॥ वेदोक्तत्वान्मन शुद्ध्या कर्मयज्ञोऽपि योगिन । ब्रह्मयज्ञ इतीच्छन्त श्येन

याग त्यजन्ति निम् ? ॥ ३ ॥ ब्रह्मयज्ञ पर कर्म गृहस्थस्याधिकारिण । पूजादि वीतरागस्य ज्ञानमेव तु योगिन ॥ ४ ॥ भिन्नोद्देशेन विहित कर्म कर्मक्षयाऽक्षमम् । क्लृप्तभिन्नाधिकार च पुत्रेष्ट्यादिवदिष्यताम् ॥ ५ ॥ ब्रह्मार्पणमपि ब्रह्मयज्ञान्तर्भावसाधनम् । ब्रह्माग्नौ कर्मणो युक्त स्वकृतत्वस्मये हुते ॥६॥ ब्रह्मण्यर्पितसर्वस्वो ब्रह्मदृग्ब्रह्मसाधन । ब्रह्मणा जुह्वदब्रह्म ब्रह्मणि ब्रह्मगुप्तिमान् ॥ ७ ॥ ब्रह्माध्ययननिष्ठावान् परब्रह्मसमाहित । ब्राह्मणो लिप्यते नाघैर्नियागप्रतिपत्तिमान् ॥ ८ ॥

**भावपूजाष्टकम्**—दयाम्भसा कृतस्नान सन्तोषशुभवस्त्रभृत् । निवेकतिलकभ्राजी भावनापावनाशय ॥ १ ॥ भक्तिश्रद्धानघुसृणोन्मिश्रकश्मीरजद्रवै । नवब्रह्मांगतो देव शुद्धमात्मानमर्चय ॥ २ ॥ क्षमापुष्पस्रज धर्मयुग्मक्षौमद्वय तथा । ध्यानाभरणसार च तदङ्गे विनिवेशय ॥३॥ मदस्थानभिदात्यागैर्लिखाग्रे चाष्टमङ्गलीम् । ज्ञानाग्नौ शुभसङ्कल्पकाकतुण्ड च धूपय ॥ ४ ॥ प्राग्धर्मलवणोत्तार धर्मसंन्यासवह्निना । कुर्वन् पूरय सामर्थ्यराजन्नीराजनाविधिम् ॥ ५ ॥ स्फुरन्मङ्गलदीप च स्थापयानुभव पुर । योगनृत्यपर(स्तु)तौर्यत्रिकसयमवान् भव ॥ ६ ॥ उल्लसन्मनस सत्यघण्टा वादयतस्तव । भावपूजारतस्येत्थ करक्रोडे महोदय ॥ ७ ॥ द्रव्यपूजोचिता भेदोपासना गृहमेधिनाम् । भावपूजा तु साधूनामभेदोपासनात्मिका ॥ ८ ॥

**ध्यानाष्टकम्**—ध्याता ध्येय तथा ध्यान त्रय यस्यैकता गतम् । मुनेरनन्यचित्तस्य तस्य दु ख न विद्यते ॥ १ ॥ ध्यातान्तरात्मा ध्येयस्तु परमात्मा प्रकीर्तित । ध्यान चैकाग्र्यसवित्ति समापत्तिस्तदेकता ॥ २ ॥ मणौ बिम्बप्रतिच्छाया समापत्ति परात्मन । क्षीणवृत्तौ भवेद् ध्यानादन्तरात्मनि निर्मले ॥ ३ ॥ आपत्तिश्च तत पुण्यतीर्थकृत्कर्मबन्धत । तद्भावाभिमुखत्वेन सम्पत्तिश्च क्रमाद्भवेत् ॥ ४ ॥ इत्थ ध्यानफलाद्युक्त विंशतिस्थानकाद्यपि । कष्टमात्र त्वभव्यानामपि नो दुर्लभ भवे ॥ ५ ॥ जितेन्द्रियस्य धीरस्य प्रशान्तस्य स्थिरात्मन । सुखासनस्य नासाग्रन्यस्तनेत्रस्य योगिन ॥ ६ ॥ रुद्धबाह्यमनोवृत्तेर्धारणाधारया रयात् । प्रसन्नस्याप्रमत्तस्य चिदानन्दसुधालिह ॥ ७ ॥ साम्राज्यमप्रतिद्वन्द्वमन्तरेव वितन्वत । ध्यानिनो नोपमा लोके सदेव मनुजेऽपि हि ॥ ८ ॥

**तपोऽष्टकम्**—ज्ञानमेव बुधा प्राहु कर्मण

त्वरमेवेष्ट ग्राह्य तदुपबृहकम् ॥ १ ॥ आनुश्रोतसिकी वृत्तिर्बालाना सुखशीलता । प्रातिश्रोतसिकी वृत्तिर्ज्ञानिना परम तप ॥ २ ॥ धनार्थिना यथा नास्ति शीततापादि दुस्सहम् । तथा भवविरक्ताना तत्त्वज्ञानार्थिनामपि ॥३॥ सदुपायप्रवृत्तानामुपेयमधुरत्वत । ज्ञानिना नित्यमानन्दवृद्धिरेव तपस्विनाम् ॥ ४ ॥ इत्थ च दु खरूपत्वात्तपो व्यर्थमितीच्छताम् । बौद्धाना निहता बुद्धिर्बौद्धानन्दापरिक्षयात् ॥ ५ ॥ यत्र ब्रह्म जिनार्चा च कषायाणा तथा हति । सानुबन्धा जिनाज्ञा च तत्तप शुद्धमिष्यते ॥ ६ ॥ तदेव हि तप कार्य दुर्ध्यान यत्र नो भवेत् । येन योगा न हीयन्ते क्षीयन्ते नेन्द्रियाणि वा ॥ ७ ॥ मूलोत्तरगुणश्रेणिप्राज्यसाम्राज्यसिद्धये । बाह्यमाभ्यन्तर चेत्थ तप कुर्यान्महामुनि ॥ ८ ॥

**सर्वनयाश्रयणाष्टकम्**—धावन्तोऽपि नया सर्वे स्युर्भावे कृतविश्रमा । चारित्रगुणलीन स्यादिति सर्वनयाश्रित ॥ १ ॥ पृथग्नया मिथ पक्षप्रतिपक्षकदर्थिता । समवृत्तिसुखास्वादी ज्ञानी सर्वनयाश्रितः ॥ २ ॥ नाप्रमाण प्रमाण वा सर्वमप्यविशेषितम् । विशेषित प्रमाण स्यादिति सर्वनयज्ञता ॥ ३ ॥ लोके सर्वनयज्ञाना ताटस्थ्य वाप्यनुग्रह । स्यात् पृथङ्नयमूढाना स्मयार्तिर्वाप्यतिग्रह ॥ ४ ॥ श्रेय सर्वनयज्ञाना विपुल धर्मवादत । शुष्कवादविवादाच्च परेषा तु विपर्यय ॥ ५ ॥ प्रकाशित जिनाना यैर्मत सर्वनयाश्रितम् । चित्ते परिणत चेद येषा तेभ्यो नमो नम ॥ ६ ॥ निश्चये व्यवहारे च त्यक्त्वा ज्ञाने च कर्मणि । एकपाक्षिकविश्लेषमारूढा शुद्धभूमिकाम ॥ ७ ॥ अमूढलक्ष्याः सर्वत्र पक्षपातविवर्जिता । जयन्ति परमानन्दमया सर्वनयाश्रया ॥ ८ ॥

**उपसहारार्थं सर्वाष्टकाना भावनाभिधानाख्याननिर्देश**—पूर्णो मग्न स्थिरोऽमोहो ज्ञानी शान्तो जितेन्द्रिय । त्यागी क्रियापरस्तृप्तो निर्लेपो निस्पृहो मुनि ॥ १ ॥ विद्याविवेकसम्पन्नो मध्यस्थो भयवर्जित । अनात्मशसकस्तत्त्वदृष्टि सर्वसमृद्धिमान् ॥ २ ॥ ध्याता कर्मविपाकानामुद्विग्नो भववारिधे । लोकसज्ञाविनिर्मुक्त शास्त्रदृग् निष्परिग्रह ॥ ३ ॥ शुद्धानुभववान् योगी नियागप्रतिपत्तिमान् । भावार्चाध्यानतपसा भूमि सर्वनयाश्रित ॥ ४ ॥ स्पष्ट निष्टङ्कित तत्त्व अष्टकै प्रतिपन्नवान् । मुनिर्महोदय ज्ञानसार समधिगच्छति ॥ ५ ॥ निर्विकार निराबाध ज्ञानसारमुपेयुषाम् । विनिवृत्तपराशाना मोक्षोऽत्रैव महात्मनाम् ॥६॥

चित्तमार्द्रीकृतं ज्ञानसारसारस्वतोर्मिभिः । नाप्नोति तीव्रमोहाग्निप्लोषशोषकदर्थनाम् ॥ ७ ॥ अचिन्त्या कापि साधूनां ज्ञानसारगरिष्ठता । गतिर्ययोर्ध्वमेव स्यादधःपातः कदापि न ॥ ८ ॥ क्लेशक्षयो हि मण्डूकचूर्णतुल्यः क्रियाकृतः । दग्धतच्चूर्णसदृशो ज्ञानसारकृतः पुनः ॥ ९ ॥ ज्ञानपूता परेऽप्याहुः क्रियां हेमघटोपमाम् । युक्तं तदपि तद्भावं न यद्भग्नापि सोज्झति ॥१०॥ क्रियाशून्यं च यज्ज्ञानं ज्ञानशून्या च या क्रिया । अनयोरन्तरं ज्ञेयं भानुखद्योतयोरिव ॥ ११ ॥ चारित्रं विरतिः पूर्णा ज्ञानस्योत्कर्ष एव हि । ज्ञानाद्वैतनये दृष्टिर्देया तद्योगसिद्धये ॥ १२ ॥

**एतच्छास्त्ररचनाकालक्षेत्रादि**—सिद्धिं सिद्धपुरे पुरन्दरपुरस्पर्द्धावहे लब्धवान् । चिद्दीपोऽयमुदारसारमहसा दीपोत्सवे पर्वणि । एतद्भावनभावपावनमनश्चञ्चच्चमत्कारिणां तैस्तैर्दीपशतैः सुनिश्चयमतैर्नित्योऽस्तु दीपोत्सवः ॥ १३ ॥ केषाञ्चिद्विषयज्वरातुरमहो चित्तं परेषां विषावेगोदर्ककुतर्कमूर्च्छितमथान्येषां कुवैराग्यतः । लग्नालर्कमबोधकूपपतितं चास्ते परेषामपि स्तोकानां तु विकारभाररहितं तज्ज्ञानसाराश्रितम् ॥ १४ ॥

**ग्रन्थाभ्यासरूपफलम्**—जातोद्रेकविवेकतोरणततेर्धावल्यमातन्वते हृद्गेहे समयोचितः प्रसरति स्फीतश्च गीतध्वनिः । पूर्णानन्दघनस्य किं सहजया तद्भाग्यभङ्ग्या भवन्नैतद्ग्रन्थमिषात्करग्रहमहश्चित्रश्चरित्रश्रियः ॥१५॥ भावस्तोमपवित्रगोमयरसैः सिक्तेव भूः सर्वतः, संसिक्ता शमतोदकैरथ पथि न्यस्ता विवेकस्रजः । अध्यात्मामृतपूर्णकामकलशश्चक्रेऽत्र शास्त्रे पुरः पूर्णानन्दघने पुरं प्रविशति स्वीयं कृतं मङ्गलम् ॥१६॥ गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः, प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामैयरुः । तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशोः, श्रीमन्न्यायविशारदस्य कृतिनामेषा कृतिः प्रीतये ॥ १७ ॥

---

## श्रीधर्मदासगणिविरचिता उपदेशमाला

नमिऊण जिणवरिंदे, इंदनरिंदच्चिए तिलोअगुरू । उवएसमालमिणमो, वुच्छामि गुरूवएसेण ॥ १ ॥ जगचूडामणिभूओ, उसभो वीरो तिलोअसिरितिलओ । एगो लोगाइच्चो, एगो चक्खू तिहुअणस्स ॥ २ ॥ संवच्छरमुसभजिणो, छम्मासा वद्धमाणजिणचंदो । इअ विहरिआ निरसणा, जइज्ज एओवमाणेण ॥ ३ ॥ जइ ता ति

अमरिसनणस्स । इअ जीअलक्खाइ, एस समा सव्वसाहूण ॥ ४ ॥ न चइज्जइ चालेउ, महइमहावद्धमाणजिणचंदो । उवसग्गसहस्सेहिवि, मेरू जह वायगुंजाहिं ॥ ५ ॥ भद्दो विणीअविणओ, पढमगणहरो समत्तसुअनाणी । जाणतोऽवि तमत्थ, विम्हिअहिअओ सुणइ सव्व ॥ ६ ॥ ज आणवेइ राया, पगइओ त सिरेण इच्छति । इअ गुरुजणमुहभणिअ, कयजलिउडेहिं सोअव्व ॥ ७ ॥ जह सुरगणाण इदो, गहगणतारागणाण जह चंदो । जह य पयाण नरिंदो, गणस्सवि गुरू तहाणदो ॥ ८ ॥ बालुत्ति महीपालो, न पया परिभवइ एस गुरु उवमा । ज वा पुरओ काउ, विहरति मुणी तहा सोवि ॥ ९ ॥ पडिरूवो तेयस्सी, जुगप्पहाणागमो महुरवक्को । गमीरो धीमतो, उवएसपरो अ आयरिओ ॥ १० ॥ अपरिस्सावी सोमो, सगहसीलो अभिग्गहमई य । अविकत्थणो अचवलो, पसतहियओ गुरू होइ ॥ ११ ॥ कइयावि जिणवरिंदा, पत्ता अयरामर पह दाउ । आयरिएहिं पवयण, धारिज्जइ सपय सयल ॥ १२ ॥ अणुगम्मए भगवई, रायसुअज्जासहस्सविंदेहिं । तहवि न करेइ माण, परियच्छइ त तहा नूण ॥ १३ ॥ दिणदिक्खिअस्स दमगस्स, अभिमुहा अज्जचदणा अज्जा । नेच्छइ आसणगहण, सो विणओ सव्वअज्जाण ॥ १४ ॥ वरिससयदिक्खिआए, अज्जाए अज्जदिक्खिओ साहू । अभिगमणवदणनमसणेण विणएण सो पुज्जो ॥ १५ ॥ धम्मो पुरिसप्पभवो पुरिसवरदेसिओ, पुरिसजिट्ठो । लोएवि पहू पुरिसो, किं पुण लोगुत्तमे धम्मे ? ॥ १६ ॥ सवाहणस्स रण्णो, तइया वाणारसीएँ नयरीए । कन्नासहस्समहिअ, आसी किर रूववतीण ॥ १७ ॥ तहविय सा रायसिरी, उल्लुट्टती न ताइया ताहिं । उयरट्ठिएण इक्केण ताइया अगवीरेण ॥ १८ ॥ महिलाण सुबहुआणवि, मज्झाओ इह समत्तघरसारो । रायपुरिसेहिं निज्जइ, जणेऽवि पुरिसो जहिं नत्थि ॥ १९ ॥ किं परजणबहुजाणावणाहिं वरमप्पसक्खिय सुकय । इह भरहचक्कवट्टी, पसन्नचदो य दिट्ठता ॥२०॥ वेसोऽवि अप्पमाणो असजमपहेसु वट्टमाणस्स । किं परिअत्तिअवेस, विस न मारेइ खज्जत ? ॥ २१ ॥ धम्म रक्खइ वेसो, सकइ वेसेण दिक्खिओ म्हि अह । उम्मग्गेण पडत, रक्खइ राया जणवउ व्व ॥ २२ ॥ अप्पा जाणइ अप्पा, जहट्ठिओ अप्पसक्खिओ धम्मो । अप्पा करेइ त तह, जह अप्पसुहावह होइ ॥ २३ ॥ ज ज समय जीवो, आविसइ जेण जेण

भावेण । सो तम्मि तम्मि समये, सुहासुह बधए कम्म ॥ २४ ॥ धेम्मो मएण हुतो तो नवि सीउण्हवायविज्झडिओ । सवच्छरम ( रं अ ) णसिओ, बाहुबली तह किलिस्सतो ॥ २५ ॥ निअगमइविगप्पिअचिंतिएण सच्छदबुद्धिरइएण्ण । क्तो पारत्तहिअ कीरइ गुरुअणुवएसेंण ? ॥ २६ ॥ थद्धो निरोवयारी, अविणीओ गव्विओ निरुवणामो । साहुजणस्स गरहिओ, जणेऽवि वयणिज्जय लहइ ॥ २७ ॥ थोवेणवि सप्पुरिसा, सणकुमारुव्व केइ बुज्झति । देहे खणपरिहाणी, ज किर देवेहिं से कहिया ॥ २८ ॥ जइ ता लवसत्तमसुरविमाणवासीवि परिवडति सुरा । चिंतिज्जत सेस, ससारे सासय कयर ? ॥ २९ ॥ कह त भण्णइ सुक्ख ? सुचिरेणवि जस्स दुक्खमल्लिअइ । ज च मरणावसाणे, भवससाराणुबधि च ॥ ३० ॥ उवएससहस्सेहिवि, बोहिज्जतो न बुज्झइ कोई । जह बभदत्तराया, उदायिनिवमारओ चेव ॥ ३१ ॥ गयकण्णचचलाए, अप रिचत्ताएँ रायलच्छीए । जीवा सकम्मकलिमलभरियभरा तो पडति अहे ॥ ३२ ॥ वोत्तूणवि जीवाण, सुदुक्कराइति पावचरिआइ । भयव जा सा सा सा, पच्चाएसो हु इणमो ते ॥ ३३ ॥ पडिवज्जिऊण दोसे, निअए सम्म च पायवडिआए । तो किर मिगावईए, उप्पन्न केवल नाण ॥३४॥ कि सक्का वुत्तु जे सरागधम्मम्मि कोइ अकसाओ ? । जो पुण धरिज्ज धणिअ, दुव्वयणुज्जालिए स मुणी ॥ ३५ ॥ कडुअकसायतरूण, पुप्फ च फल च दोऽवि विरसाइ । पुप्फेण झाइ कुविओ, फलेण पाव समायरइ ॥ ३६ ॥ सतेऽवि कोऽवि उज्झइ, कोऽवि असतेऽवि अहिलसइ भोए । चयइ परपच्चएणऽवि, पभवो दट्ठूण जह जबु ॥ ३७ ॥ दीसति परमघोराऽवि पवरधम्मप्पभावपडिबुद्धा । जह सो चिलाइपुत्तो, पडिबुद्धो सुसुमाणाए ॥ ३८ ॥ पुप्फियफलिए तह पिउघरम्मि तण्हा छुहा समणुबद्धा । ढढेण तहा विसढा, विसढा जह सफल्या जाया ॥३९॥ आहारेसु सुहेसु अ, रम्मावसहेसु काणणेसु च । साहूण नाहिगारो अहिगारो धम्मकज्जेसु ॥४०॥ साहू कातारमहाभएसु अवि जणवएवि मुइअम्मि । अवि ते सरीरपीड, सहती न लह (य) ति य विरुद्ध ॥ ४१ ॥ जतेहिं पीलियावि हु, खदगसीसा न चेव परिकुविया । विइयपरमत्थसारा, खमति जे पडिआ हुति ॥४२॥ जिणवयणसुइसकण्णा, अवगयससारघोरपेयाला । बालाण खमति जई, जइत्ति किं इत्थ अच्छेर ? ॥ ४३ ॥ न कुल इत्थ पहाण, हरिएस-

चलस्स किं कुल आसी ? । आकंपिया तवेण, सुरावि जं पज्जुवासंति ॥ ४४ ॥ देवो नेरइउत्ति य, कीड पयंगुत्ति माणुसो वेसो । रूवस्सी अ विरूवो, सुहभागी दुक्खभोगी अ ॥ ४५ ॥ राउत्ति य दमगुत्ति य, एस सपागुत्ति एस वेयविऊ । सामी दासो पुज्जो, खलुत्ति अधणो धणवइत्ति ॥ ४६ ॥ नवि इत्थ कोऽवि नियमो, सकम्मविणिविट्ठसरिसकयचिट्ठो । अन्नुन्नरूववेसो, नडुव्व परियत्तए जीवो ॥४७॥ कोडीसएहिं धणसंचयस्स गुणसुभरियाए कन्नाए । नवि लुद्धो वयररिसी, अलोभया एस साहूण ॥४८॥ अंतेउरपुरबलवाहणेहिं वरसिरिघरेहिं मुणिवसहा । कामेहिं बहुविहेहि य, छंदिज्जंतावि नेच्छंति ॥४९॥ छेओ भेओ वसणं, आयासकिलेसभयविवागो अ । मरणं धम्मब्भंसो, अरई अत्थाउ सव्वाइं ॥ ५० ॥ दोसंसयमूलजालं, पुव्वरिसिविवज्जियं जई वंतं । अत्थं वहसि अणत्थं, कीस अणत्थं तवं चरसि ? ॥ ५१ ॥ वहबंधणमारणसेहणाओ काओ परिग्गहे नत्थि । तं जइ परिग्गहुच्चिय, जइधम्मो तो नणु पवंचो ॥५२॥ किं आसि नंदिसेणस्स कुलं जं हरिकुलस्स विउलस्स । आसी पियामहो सच्चरिएण वसुदेवनामुत्ति ॥ ५३ ॥ विज्जाहरीहिं सहरिसं, नरिंददुहियाहि अहमहंतीहिं । जं पत्थिज्जइ तइया, वसुदेवो तं तवस्स फलं ॥ ५४ ॥ सपरक्कमराउलवाइएण सीसे पलीविए नियए । गयसुकुमालेण खमा, तहा कया जह सिवं पत्तो ॥ ५५ ॥ रायकुलेसुऽवि जाया, भीया जरमरणगब्भवसहीणं । साहू सहंति सव्वं, नीयाणऽवि पेसपेसाणं ॥ ५६ ॥ पणमंति य पुव्वयरं कुलया, न नमंति अकुलया पुरिसा । पणओ इह पुव्विं जइजणस्स जह चक्कवट्टिमुणी ॥ ५७ ॥ जह चक्कवट्टिसाहू सामाइअसाहुणा निरुवयारं । भणिओ न चेव कुविओ, पणओ बहुअत्तणगुणेणं ॥ ५८ ॥ ते धन्ना ते साहू, तेसिं नमो जे अकज्जपडिविरया । धीरा वयमसिहारं, चरंति जह थूलिभद्दमुणी ॥ ५९ ॥ विसयासिपंजरमिव, लोए असिपंजरम्मि तिक्खम्मि । सिंहा य पंजरगया, वसंति तवपंजरे साहू ॥ ६० ॥ जो कुणइ अप्पमाणं, गुरुवयणं न य लहइ उवएसं । सो पच्छा तह सोअइ, उवकोसघरे जह तवस्सी ॥ ६१ ॥ जिट्ठव्वयपव्वयभरसमुव्वहणववसिअस्स अच्चंतं । जुवइजणसंवइयरे, जइत्तणं उभयओ भट्ठं ॥ ६२ ॥ जइ ठाणी जइ मोणी, जइ मुंडी वक्कली तवस्सी या । पत्थंतो अ अबंभं, बंभावि न रोयए मज्झ ॥ ६३ ॥ तो पढियं

तो गुणिय, तो गुणिय तो अ चेइओ अप्पा । आवडियपेल्लियामतिओऽवि जइ न चुणइ अकज्जं ॥ ६४ ॥ पागडियसव्वसल्लो, गुरुपामूलम्मि लहइ साहुपयं । अविसुद्धस्स न वड्ढइ, गुणसेढी तत्तिया ठाइ ॥ ६५ ॥ जइ दुक्करदुक्करकारउत्ति भणिओ जहट्ठिओ साहू । तो कीस अज्जसंभूअविजयसीसेहिं नवि खमिअं ? ॥ ६६ ॥ जइ ताव सव्वओ सुंदरुत्ति कम्माण उवसमेण जई । धम्मं वियाणमाणो, इयरो किं मच्छरं वहइ ? ॥ ६७ ॥ अइसुट्ठिओत्ति गुणसमुइओत्ति जो न सहइ जइपससं । सो परिहाइ परभवे, जहा महापीढपीढरिसी ॥ ६८ ॥ परपरिवायं गिण्हइ, अट्ठमयविरल्लणे सया रमइ । डज्झइ य परसिरीए, सकसाओ दुक्खिओ निच्चं ॥ ६९ ॥ विग्गहविवायरुइणो, कुलगणसंघेण बाहिरकयस्स । नत्थि किर देवलोएवि देवसमिईसु अवगासो ॥ ७० ॥ जइ ता जणसववहारवज्जियमकज्जमायरइ अन्नो । जो तं पुणो विकत्थइ, परस्स वसणेण सो दुहिओ ॥ ७१ ॥ सुट्ठुवि उज्जम (म) माणं, पंचेव करिंति रित्तयं समणं । अप्पथुई परनिंदा, जिब्भोवत्था कसाया य ॥ ७२ ॥ परपरिवायमईओ, दूसइ वयणेहिं जेहिं जेहिं परं । ते ते पावइ दोसे, परपरिवाई इअ अपिच्छो ॥ ७३ ॥ थद्धा छिद्दप्पेही, अवण्णवाई सयंमई चवला । वंका कोहणसीला, सीसा उव्वेअगा गुरुणो ॥ ७४ ॥ जस्स गुरुम्मि न भत्ती, न य बहुमाणो न गउरवं न भयं । नवि लज्जा नवि नेहो, गुरुकुलवासेण किं तस्स ? ॥ ७५ ॥ रूसइ चोइज्जंतो, वहई हियएण अणुसयं भणिओ । न य कम्हि करणिज्जे, गुरुस्स आले न सो सीसो ॥७६॥ उव्विल्लणसूअणपरिभवेहिं अइभणियदुट्ठभणिएहिं । सत्ताहिया सुविहिया, न चेव भिंदंति मुहरागं ॥ ७७ ॥ माणंसिणोवि अवमाणवंचणा ते परस्स न करंति । सुहदुक्खुग्गिरणत्थं, साहू उअहिव्व गंभीरा ॥७८॥ मउआ निहुअसहावा, हासदवविवज्जिया विगहमुक्का । असमंजसमइबहुअं, न भणंति अपुच्छिआ साहू ॥ ७९ ॥ महुरं निउणं थोवं, कज्जावडिअं अगव्वियमतुच्छं । पुव्विं मइसंकलियं, भणंति जं धम्मसंजुत्तं ॥८०॥ सट्ठिं वाससहस्सा, तिसत्तखुत्तोदयेण धोएण । अणुचिण्णं तामलिणा, अन्नाणतवुत्ति अप्पफलो ॥८१॥ छज्जीवकायवहगा, हिंसगसत्थाइं उवइसंति पुणो । सुबहुंपि तवकिलेसो, बालतवस्सीण अप्पफलो ॥ ८२ ॥ परियच्छंति अ सव्वं, जहट्ठियं अवितहं असंदिद्धं । तो जिणवयणविहिन्नू सहंति बहुअस्स बहुआइं ॥ ८३ ॥

जो जस्स वट्टइ हियए सो त ठावेइ सुदरसहाव । धम्मी छाय जणणी, भद्द सोम च मनेइ ॥ ८४ ॥ मणिकणगरयणधणपूरियम्मि भवणम्मि सालिभद्दोऽवि । अन्नो क्रिर मज्झवि सामिओत्ति जाओ विगयकामो ॥८५॥ न करति जे तवसजम च तुल्लपाणिपायाण । पुरिमा समपुरिसाण, अवस्स पेसत्तणमुविंति ॥ ८६ ॥ सुदरसुकुमालसुहोइएण विविहेहिं तवविसेसेहिं । तह सोसविओ अप्पा जह नवि नाओ सभवणेऽपि ॥ ८७ ॥ दुक्करमुद्धोसकर, अवतिसुकुमालमहरिसीचरिय । अप्पावि नाम तह तज्जइत्ति अच्छेरय एअ ॥ ८८ ॥ उच्छूढसरीरघरा, अन्नो जीवो सरीरमनति । धम्मस्स कारणे सुविहिया सरीरपि छड्डुति ॥ ८९ ॥ एगदिवसपि जीवो, पव्वज्ज मुवागओ अनन्नमणो । जइवि न पावइ मुक्ख, अवस्स वेमाणिओ होइ ॥ ९० ॥ सीसावेढेण सिरम्मि वेढिए निग्गयाणि अच्छीणि । मेयज्जस्स भगवओ, न य सो मणसावि परिकुविओ ॥ ९१ ॥ जो चदणेण बाहु, आलिंपइ वासिणा वि तच्छेइ । सथुणइ जो अ निंदइ, महरिसिणो तत्थ समभावा ॥ ९२ ॥ सिंहगिरिसुसीसाण, भद्द गुरुवयणसद्दहताण । वयरो क्रिर दाही वायणत्ति न विकोविअ वयण ॥ ९३ ॥ मिण गोणसगुलीहिं, गणेहि वा दतचक्कलाइ से । इच्छति भाणिऊण, (माणियव्व) कज्ज तु त एव जाणति ॥ ९४ ॥ कारणविऊ कयाई, सेय काय वयति आयरिया । त तह सद्दहिअव्व भविअव्व कारणेण तहिं ॥ ९५ ॥ जो गिण्हइ गुरुवयण, भण्णत भावओ विसुद्धमणो । ओसहमिव पिज्जत, त तस्स सुहावह होइ ॥ ९६ ॥ अणुवत्तगा विणीआ, बहुक्खमा निच्चभत्तिमता य । गुरुकुलवासी अमुइ, धन्ना सीसा इह सुसीला ॥ ९७ ॥ जीवतस्स इह जसो, कित्ती य मयस्स परभवे धम्मो । सुगुणस्स य, निग्गुणस्स य अजसाऽकित्ती अहम्मो य ॥ ९८ ॥ वुड्ढावासेऽवि ठिय, अहव गिलाण गुरु परिभवति । दत्तुव्व धम्मवीमसएण दुस्सिक्खिसय तपि ॥ ९९ ॥ आयरिय भत्तिरागो, कस्स सुनक्खत्तमहरिसीसरिसो । अवि जीविअं ववसिअ, न चेव गुरुपरिभवो सहिओ ॥१००॥ पुण्णेहिं चोइआ पुरक्खडेहिं सिरिभायण भविअसत्ता । गुरुमागमेसिभद्दा, देवयमिव पज्जुवासति ॥१०१॥ बहुसुक्खसयसहस्साण दायगा मोअगा दुहसयाण । आयरिआ फुडमेअ, केसिपएसीअ (य) ते हेऊ ॥ १०२ ॥ नरयगइगमणपडिहत्थए कए तह पएसिणा रण्णा । अमरविमाण पत्त, त आयरिअप्पभावेण ॥ १०३ ॥

धम्ममइएहिँ अइसुंदरेहिँ कारणगुणोवणीएहिँ । पल्हायंतो य मणं, सीसं चोएइ आयरिओ ॥ १०४ ॥ जीअं काऊण पणं, तुरमिणिदत्तस्स कालिअज्जेण । अविअ सरीरं चत्तं, न य भणिअमहम्मसंजुत्तं ॥ १०५ ॥ फुडपागडमकहंतो, जहट्ठिअं बोहिलाभमुवहणइ । जह भगवओ विसालो, जरमरणमहोअही आसि ॥ १०६ ॥ कारुण्णरुण्णसिंगारभावभयजीविअंतकरणेहिँ । साहू अविअ मरंति, न य निअनिअमं विराहंति ॥ १०७ ॥ अप्पहियमायरंतो अणुमोअंतो अ सुग्गइं लहइ । रहकारदाणअणुमोअगो मिगो जह य बलदेवो ॥ १०८ ॥ जं तं कयं पुरा पूरणेण अइदुक्करं चिरं कालं । जइ तं दयावरो इह, करिंतु तो सफलयं हुंतं ॥ १०९ ॥ कारणनीयावासी, सुट्ठुयरं उज्जमेण जइयव्वं । जह ते संगमथेरा, सपाडिहेरा तया आसी ॥ ११० ॥ एगंतनियावासी, घरसरणाईसु जइ ममत्तंपि । कह न पडिहंति कलिकलुसरोसदोसाण आवाए ॥ १११ ॥ अवि कत्तिऊण जीवे, कत्तो घरसरणगुत्तिसंठप्पं । अवि कत्तिआ य तं तह, पडिआ अस्संजयाण पहे ॥ ११२ ॥ थोवोऽवि गिहिपसंगो, जइणो सुद्धस्स पंकमावहई । जह सो वारत्तरिसी, हसिओ पज्जोअनरवइणा ॥ ११३ ॥ सब्भावो वीसंभो, नेहो रइवइयरो अ जुवइजणे । सयणघरसंपसारो, तवसीलवयाइं फेडिज्जा ॥ ११४ ॥ जोइसनिमित्तअक्खरकोउआएसभूइकम्मेहिँ । करणाणुमोअणाहि अ, साहुस्स तवक्खओ होइ ॥ ११५ ॥ जह जह कीरइ संगो, तह तह पसरो खणे खणे होइ । थोवोवि होइ बहुओ, न य लहइ धिइं निरुंभंतो ॥ ११६ ॥ जो चयइ उत्तरगुणे, मूलगुणेऽवि अचिरेण सो चयइ । जह जह कुणइ पमायं, पिल्लिज्जइ तह कसाएहिँ ॥ ११७ ॥ जो निच्छएण गिण्हइ, देहच्चाएवि न य धिइं मुअइ । सो साहेइ सकज्जं, जह चंदवडिंसओ राया ॥ ११८ ॥ सीउण्हखुप्पिवासं, दुस्सिज्जपरीसहं किलेसं च । जो सहइ तस्स धम्मो जो धिइमं सो तवं चरइ ॥ ११९ ॥ धम्ममिणं जाणंता, गिहिणोऽवि दढव्वया किमुअ साहू ? । कमलामेलाहरणे, सागरचंदेण इत्थुवमा ॥ १२० ॥ देवेहिँ कामदेवो, गिहीवि नवि चालिओ ( चाइओ ) तवगुणेहिं । मत्तगयंदभुयंगमरक्खसघोरट्टहासेहिँ ॥ १२१ ॥ भोगे अभुंजमाणावि केइ मोहा पडंति अहरगइं । कुविओ आहारत्थी, जत्ताइ जणस्स दमगुव्व ॥ १२२ ॥ भवसयसहस्सदुलहे, जाइजरामरणसागरुत्तारे । जिणवयणम्मि गुणायर

खणमवि मा काहिसि पमायं ॥ १२३ ॥ जं न लहइ सम्मत्तं, लद्धूणवि जं न एइ संवेगं । विसयसुहेसु य रज्जइ, सो दोसो रागदोसाणं ॥१२४॥ तो बहुगुणनासाणं, सम्मत्तचरित्तगुणविणासाणं । न हु वसमागंतव्वं, रागदोसाण पावाणं ॥ १२५ ॥ नवि तं कुणइ अमित्तो, सुट्ठुवि सुविराहिओ समत्थोऽवि । जं दोऽवि अणिग्गहिया, करंति रागो अ दोसो अ ॥ १२६ ॥ इहलोए आयासं अजसं च करेंति गुणविणासं च । पसवंति अ परलोए, सारीरमणोगए दुक्खे ॥ १२७ ॥ धिद्धी अहो अकज्जं, जं जाणंतोऽवि रागदोसेहिं । फलमउलं कडुअरसं, तं चेव निसेवए जीवो ॥ १२८ ॥ को दुक्खं पाविज्जा? कस्स व सुक्खेहिं विम्हओ हुज्जा? । को व न लभिज्ज मुक्खं? रागद्दोसा जइ न हुज्जा ॥ १२९ ॥ माणी गुरुपडिणीओ, अणत्थभरिओ अमग्गचारी य । मोहं किलेसजालं, सो खाइ जहेव गोसालो ॥ १३० ॥ कलहणकोहणसीलो, भंडणसीलो विवायसीलो य । जीवो निच्चुज्जलिओ, निरत्थयं संजमं चरइ ॥ १३१ ॥ जह वणदवो वणं दवदवस्स जलिओ खणेण निद्दहइ । एवं कसायपरिणओ, जीवो तवसंजमं दहइ ॥ १३२ ॥ परिणामवसेण पुणो, अहिओ ऊणो यओ व हुज्ज खओ । तहवि ववहारमित्तेण, भण्णइ इमं जहा थूलं ॥ १३३ ॥ फरुसवयणेण दिणतवं, अहिक्खिवंतो अ हणइ मासतवं । वरिसतवं सवमाणो, हणइ हणंतो अ सामण्णं ॥ १३४ ॥ अह जीविअं निकिंतइ, हंतूण य संजमं मलं चिणइ । जीवो पमायबहुलो, परिभमइ अ जेण संसारे ॥ १३५ ॥ अक्कोसणतज्जणताडणा य अवमाणहीलणाओ अ । मुणिणो मुणियपरभवा दढप्पहारिव्व विसहंति ॥ १३६ ॥ अहमा हओत्ति न य पडिहणंति सत्ताऽवि न य पडिसवंति । मारिज्जंताऽवि जई, सहंति साहस्समल्लुव्व ॥ १३७ ॥ दुज्जणमुहकोदंडा, वयणसरा पुव्वकम्मनिम्माया। साहूण ते न लग्गा, खंतीफलयं वहंताणं॥१३८॥ पत्थरेणाहओ कीवो, पत्थरं डक्कुमिच्छइ । मिगारिओ सरं पप्प, सरुप्पत्तिं विमग्गइ ॥ १३९ ॥ तह पुव्विं किं न कयं, न बाहए जेण मे समत्थोऽवि ? । इण्हिं किं कस्स व कुप्पिमुत्ति धीरा अणुप्पिच्छा ॥ १४० ॥ अणुराएण जइस्सऽवि, सियायपत्तं पिया धरावेइ । तहवि य खंदकुमारो, न बंधुपासेहिं पडिबद्धो ॥ १४१ ॥ गुरु गुरुतरो अ अइगुरु, पियमाइअवच्चपियजणसिणेहो । चिंतिज्जमाणगुविलो, चत्तो अइधम्मतिसिएहिं

